मश्व मश्वं॒ सनेयं॒ सनेय मश्वम् । अश्वङ्गाङ् गा मश्व मश्वङ्गाम् । गाँ वासो
वासो गाङ् गाँ वास॒ः । वास आत्मान मात्मानँ वासो वास आत्मानम् ।
आत्मानन् तव तवात्मान मात्मानन् तव । तव पूरुष पुरुष तव तव पूरुष ।
पुरुषेति पुरुष ।। अश्वत्थे वो वो ऽश्वत्थे ऽश्वत्थे व ः । वो निषदनन् निसदनँ वो
वो निषदनम् । निषदनं पर्णे पर्णे निसदनन् निषदनं पर्णे । निसदन मिति नि =
सदनम् । पर्णे वो व ः पर्णे पर्णे व ः । वो वसति र्वसति र्वो वो वसति ः ।
वसतिष्कृता कृता वसति र्वसतिष्कृता । कृतेति कृता ।। गोभाज इदिद् गोभाजो

गोभाज इत् । गोभाज इति गो = भाज : । इत्किल किलेदित्किल । किला
सथा सथ किल किला सथ । असथ यद्यदसथा सथ यत् । यत्सनवथ सनवथ
यद्यत्सनवथ । सनवथ पूरुषं पुरुषꣳ सनवथ सनवथ पूरुषम् । पुरुष मिति
पुरुषम् ।। यत्रौषधी रोषधी र्यत्र यत्रौषधी : । ओषधी स्समग्मत समग्मतौषधी
रोषधी स्समग्मत । समग्मत राजानो राजान स्समग्मत समग्मत राजान : ।
समग्मतेति सं = अग्मत । राजान स्समिता इव समिता इव राजानो राजान
स्समिता इव । समिता इवेति समितौ = इव ।। विप्र स्स स विप्रो विप्र स्स : ।

स उच्यत उच्यते स स उच्यते । उच्यते भिषग् भिष गुच्यत उच्यते भिषक् ।
भिषग्रक्षोहा रक्षोहा भिषग्भिष ग्रक्षोहा । रक्षोहा ऽमीवचातनो ऽमीवचातनो
रक्षोहा रक्षोहा ऽमीवचातन : । रक्षोहेति रक्ष : = हा । अमीवचातन इत्यमीव
= चातन : ।। अश्वावतीँ सोमावतीँ सोमवती मश्ववती मश्श्वावतीँ
सोमावतीम् । अश्ववतीमित्यश्व = वतीम् । सोमावती मूर्जयन्ती मूर्जयन्तीँ
सोमवतीँ सोमावती मूर्जयन्तीम् । सोमवती मिति सोम = वतीम् । ऊर्जयन्ती
मुदोजस मुदोजस मूर्जयन्ती मूर्जयन्ती मुदोजसम् । उदोजस मित्युत् = ओजसम्।।

आ ऽवित्स्यवि त्स्या वित्सि । अवित्सि सर्वा स्सर्वा - अवित्स्यवित्सि सर्वा ः ।
सर्वा - ओषधी रोषधी स्सर्वा स्सर्वा - ओषधी ः । ओषधी रस्मा - अस्मा -
ओषधी रोषधी रस्मै । अस्मा - अरिष्टतातये ऽरिष्टतातये ऽस्मा - अस्मा -
अरिष्टतातये । अरिष्टतातय इत्यरिष्ट = तातये ।। उच्छुष्मा श्शुष्मा -
उदुच्छुष्मा ः । शुष्मा - ओषधीना मोषधीनाऽ शुष्मा श्शुष्मा - ओषधीनाम् ।
ओषधीना ङ्गावो गाव ओषधीना मोषधीना ङ्गाव ः । गावो गोष्ठादिव गोस्थादिव
गावो गावो गोष्ठादिव । गोष्ठादिवेरत ईरते गोस्थादिव गोष्ठा दिवेरते । गोस्था

दिवेति गोस्थात् = इव । ईरत इतीरते ।। धनाँ सनिष्यन्तीनाꣳ सनिष्यन्तीनान्
धनन् धनाँ सनिष्यन्नीनाम् । सनिष्यन्तीना मात्मान मात्मानꣳ सनिष्यन्तीनाꣳ
सनिष्यन्तीना मात्मानम् । आत्मानन् तव तवात्मान मात्मानन् तव । तव पूरुष
पुरुष तव तव पूरुष । पुरुषेति पुरुष ।। इष्कृति र्नाम नामेष्कृति रिष्कृति र्नाम ।
नाम वो वो नाम नाम व ः । वो माता माता वो वो माता । माता ऽथो -
अथो माता माता ऽथो । अथो यूयँ यूय मथो - अथो यूयम् । अथो इत्यथो ।
यूयꣳ स्थ स्थ यूयँ य्यूयꣳ स्थ । स्थ निष्कृती र्नि ः कृती स्स्थ स्थ निष्कृती ः ।

नि : कृती रिति नि : = कृती : ।। सीरा : पतत्रिणी : पतत्रिणी स्सीरा
स्सीरा : पतत्रिणी : । पतत्रिणी स्स्थन स्थन पतत्रिणी : पतत्रिणी स्स्थन ।
स्थन यद्यत्स्थन स्थन यत् । यदामयं त्यामयति यद्य दामयति । आमयति नि र्नि
रामयं त्यामयति नि : । निष्कृथ कृथ नि र्नि ष्कृथ । कृथेति कृथ ।। अति
विश्वा विश्वा - अत्यति विश्वा : । विश्वा : परिष्ठा : परिस्था विश्वा विश्वा :
परिष्ठा : । परिष्ठा स्स्तेन इव स्तेन इव परिस्था : परिष्ठा स्स्तेन इव । परिस्था
इति परि = स्था : । स्तेन इव व्रजँ व्रज९ स्तेन इव स्तेन इव व्रजम् । स्तेन

इवेति स्तेन ः = इव । व्रज मक्रमु रक्रमु र्व्रजँ व्रज मक्रमु ः । अक्रमुरित्य
क्रमु ः ।। ओषधी ः प्र प्रौषधी रोषधी ः प्र । प्राचुच्यवु रचुच्यवु ः प्र
प्राचुच्यवु ः । अचुच्यवु र्यद्य दचुच्यवु रचुच्यवु र्यत् । यत् किङ् किँ य्यद्यत्
किम् । किश्च च किङ् किश्च । च तन्व स्तन्व श्च च तन्व ः । तन्वो रपो रप
स्तन्व स्तन्वो रप ः । रप इति रप ः ।। यदिमा - इमा यद्य दिमा ः । इमा
वाजयन् वाजय न्निमा - इमा वाजयन् । वाजय न्नह महँ वाजयन् वाजयन्नहम् ।
अह मोषधी रोषधी रह मह मोषधी ः । ओषधी र्हस्ते हस्त ओषधी रोषधी

हस्ते । हस्त आदध आदधे हस्ते हस्त आदधे । आदध इत्या = दधे ।। आत्मा
यक्ष्मस्य यक्ष्मस्यात्मा ऽऽत्मा यक्ष्मस्य । यक्ष्मस्य नश्यति नश्यति यक्ष्मस्य
यक्ष्मस्य नश्यति । नश्यति पुरा पुरा नश्यति नश्यति पुरा । पुरा जीवगृभो
जीवगृभ : पुरा पुरा जीवगृभ : । जीवगृभो यथा यथा जीवगृभो जीवगृभो यथा।
जीवगृभ इति जीव = गृभ : । यथेति यथा ।। यस्यौषधी रोषधी र्यस्य
यस्यौषधी : । ओषधी : प्रसर्पथ प्रसर्पथौषधी रोषधी : प्रसर्पथ । प्रसर्पथाङ्गमङ्ग
मङ्ग मङ्गं प्रसर्पथ प्रसर्पथा ङ्गमङ्गम् । प्रसर्पथेति प्र = सर्पथ । अङ्गमङ्गं

परुष्परु : परु : परु रङ्गमङ्ग मङ्गमङ्गं परुष्परु : । अङ्गमङ्ग मित्यङ्गम् =
अङ्गम् । परु : परु रिति परु : = परु : ।। ततो यक्ष्मँ य्यक्ष्मन् तत स्ततो
यक्ष्मम् । यक्ष्मँ वि वि यक्ष्मँ य्यक्ष्मँ वि । वि बाधध्वे बाधध्वे वि वि बाधध्वे ।
बाधध्व उग्र उग्रो बाधध्वे बाधध्व उग्र : । उग्रो मध्यमशीरिव मध्यमशीरि वोग्र
उग्रो मध्य मशीरिव । मध्यमशी रिवेति मध्यमशी : = इव ।। साकँ य्यक्ष्म यक्ष्म
साकॅ साकँ य्यक्ष्म । यक्ष्म प्र प्र यक्ष्म यक्ष्म प्र । प्र पत पत प्र प्र पत । पत
चाषेण चाषेण पत पत चाषेण । चाषेण किकिदीविना किकिदीविना चाषेण

चाषेण किकिदीविना । किकिदीविनेति किकिदीविना ।। साकँ वातस्य वातस्य

साक९ साकँ वातस्य । वातस्य ध्राज्या ध्राज्या वातस्य वातस्य ध्राज्या । ध्राज्या

साक९ साकन् ध्राज्या ध्राज्या साकम् । साकन् नश्य नश्य साक९ साकन् नश्य ।

नश्य निहाकया निहाकया नश्य नश्य निहाकया । निहाकयेति नि = हाकया ।।

अन्या वो वो ऽन्या ऽन्या व : । वो - अन्या मन्याँ वो वो - अन्याम् । अन्या

मवत्वव त्वन्या मन्या मवतु । अवत्वन्यान्या वत्वव त्वन्या । अन्या ऽन्यस्या -

अन्यस्या - अन्या ऽन्या ऽन्यस्या : । अन्यस्या - उपोपान्यस्या - अन्यस्या -

उप । उपावता वतोपोपा वत । अवतेत्य वत ।। ता स्सर्वा स्सर्वा स्ता स्ता

स्सर्वा : । सर्वा स्सँविदाना स्सँविदाना स्सर्वा स्सर्वा स्सँविदाना : । सँविदाना -

इद मिद९ सँविदाना स्सँविदाना - इदम् । सँविदाना इति सं = विदाना : । इदं

मे म इद मिदं मे । मे प्र प्र मे मे प्र । प्रावता वत प्र प्रावत । अवता वच्चो

वर्चो ऽवता वता वच : । वच इति वच : ।। या : फलिनी : फलिनी र्या

या : फलिनी : । फलिनी रफला - अफला : फलिनी : फलिनी रफला : ।

अफला - अपुष्पा - अपुष्पा - अफला - अफला - अपुष्पा : । अपुष्पा या या

- अपुष्पा - अपुष्पा या ः । या श्च च या या श्च । च पुष्पिणीः पुष्पिणी श्च च पुष्पिणी ः । पुष्पिणी रिति पुष्पिणी ः ।। बृहस्पति प्रसूता स्ता स्ता बृहस्पति प्रसूता बृहस्पति प्रसूता स्ता ः । बृहस्पति प्रसूता इति बृहस्पति - प्रसूता ः । ता नो नस्ता स्ता न ः । नो मुञ्चन्तु मुञ्चन्तु नो नो मुञ्चन्तु । मुञ्चन्त्वाँ हसो॰ हसो मुञ्चन्तु मुञ्चन्त्वाँहस ः । आँहस इत्याँहस ः ।। मुञ्चन्तु मा मा मुञ्चन्तु मुञ्चन्तु मा । मा शपथ्या च्छपथ्या न्मा मा शपथ्यात् । शपथ्यादथो - अथो शपथ्या च्छपथ्यादथो । अथो वरुण्या द्वरुण्या दथो - अथो वरुण्यात् ।

अथो इत्यथो । वरुण्यां दुतोत वरुण्यां द्वरुण्यां दुत । उतेत्युत ।। अथो यमस्य
यमस्याथो - अथो यमस्य । अथो इत्यथो । यमस्य पड्वीशात् पड्वीशा द्यमस्य
यमस्य पड्वीशात् । पड्वीशा त्सर्वस्मा त्सर्वस्मात् पड्वीशा त्पड्वीशात्सर्वस्मात् ।
सर्वस्मा द्देवकिल्बिषाद् देवकिल्बिषा त्सर्वस्मा त्सर्वस्माद् देवकिल्बिषात् ।
देवकिल्बिषादिति देव = किल्बिषात् ।। अवयती स्स॰ स मवयती रवयती
स्सम् । अवयती रित्यव = यती ः । समवदन्ता वदन्त स॰ समवदन्त । अवदन्त
दिवो दिवो ऽवदन्ता वदन्त दिव ः । दिव ओषधय ओषधयो दिवो दिव

ओषधय : । ओषधय स्परि पर्योषधय ओषधय स्परि । परीति परि ।। यञ्जीवञ्
जीवँ य्यँ य्यञ् जीवम् । जीव मश्नवामहा - अश्नवामहै जीवञ् जीव मश्नवामहै ।
अश्नवामहै न नाश्नवामहा - अश्नवामहै न । न स स न न स : । स रिष्याति
रिष्याति स स रिष्याति । रिष्याति पूरुष : पुरुषो रिष्याति रिष्याति पूरुष : ।
पुरुष इति पुरुष : ।। या - ओषधी रोषधी र्या या - ओषधी : । ओषधी
स्सोमराज्ञी स्सोमराज्ञी रोषधी रोषधी स्सोमराज्ञी : । सोमराज्ञी र्बह्वी र्बह्वी
स्सोमराज्ञी स्सोमराज्ञी र्बह्वी : । सोमराज्ञी रिति सोम = राज्ञी : । बह्वी

श्शतविंचक्षणा श्शतविंचक्षणा बह्वी र्बह्वी श्शतविंचक्षणा ः । शतविंचक्षणा इति
शत = विंचक्षणा ः ।। तासां मस्यसि तासान् तासां मसि । असि त्वन्त्व मंस्यसि
त्वम् । त्व मुंत्तमो त्तमा त्व न्त्व मुंत्तमा । उत्तमाऽर मरं मुंत्तमो त्तमाऽरम् ।
उत्तमेत्युंत् = तमा । अरङ् कामांय कामायार मरङ् कामांय । कामांय शꣳ शङ्
कामांय कामांय शम् । शाँ हृदे हृदे शꣳ शाँ हृदे । हृद इतिं हृदे ।। विष्ठिता ः
पृथिवीं पृथिवीं विस्थिंता विष्ठिता ः पृथिवीम् । विस्थिंता इति वि = स्थिंता ः ।
पृथिवी मन्वनुं पृथिवीं पृथिवी मनुं । अन्वित्यनुं ।। बृहस्पतिंप्रसूता - अस्या -

अस्यै बृहस्पतिप्रसूता बृहस्पति प्रसूता - अस्यै । बृहस्पतिप्रसूता इति बृहस्पति = प्रसूता ः । अस्यै सꣳ स मस्या - अस्यै सम् । सन्दत्त दत्त सꣳ सन्दत्त । दत्त वीर्यं वीर्यन् दत्त दत्त वीर्यम् । वीर्यमिति वीर्यम् ।। या श्च च या या श्च । चेद मिद श्च चेदम् । इद मुपशृण्वन्त्युप शृण्वन्तीद मिद मुपशृण्वन्ति । उपशृण्वन्ति या या - उपशृण्वन्त्युप शृण्वन्ति या ः । उपशृण्वन्तीत्युप = शृण्वन्ति । या श्च च या या श्च । च दूरन् दूर श्च च दूरम् । दूरं परागता ः परागता दूरन् दूरं परागता ः । परागता इति परा = गता ः ।। सर्वा स्सङ्गत्य सङ्गत्य सर्वा स्सर्वा

स्सङ्गत्य । सङ्गत्य वीरुधो वीरुध स्सङ्गत्य सङ्गत्य वीरुध ः । सङ्गत्येति सं =
गत्य । वीरुधो ऽस्या - अस्यै वीरुधो वीरुधो ऽस्यै । अस्यै सꣳ स मस्या -
अस्यै सम् । सन्दत्त दत्त सꣳ सन्दत्त । दत्त वीर्यं वीर्यन् दत्त दत्त वीर्यम् ।
वीर्यमिति वीर्यम् ।। नाशयित्री बलासस्य बलासस्य नाशयित्री नाशयित्री
बलासस्य । बला सस्या र्शसो ऽर्शसो बलासस्य बलासस्यार्शस ः । अर्शस
उपचिता मुपचिता मर्शसो ऽर्शस उपचिताम् । उपचिता मस्य स्युपचिता
मुपचिता मसि । उपचिता मित्युप = चिताम् । असीत्यसि ।। अथो शतस्य

शतस्याथो - अथो शतस्य । अथो इत्यथो । शतस्य यक्ष्माणाँ य्यक्ष्माणा९ँ
शतस्य शतस्य यक्ष्माणाम् । यक्ष्माणां पाकारो ः पाकारो र्यक्ष्माणाँ य्यक्ष्माणां
पाकारो ः । पाकारो रस्यसि पाकारो ः पाकारो रसि । पाकारोरिति पाक =
अरो ः । असि नाशनी नाशन्यस्यसि नाशनी । नाशनीति नाशनी ।। मा वो वो
मा मा व ः । वो रिषद्रिष द्वो वो रिषत् । रिषत् खनिता खनिता रिषद्रिषत्
खनिता । खनिता यस्मै यस्मै खनिता खनिता यस्मै । यस्मै च च यस्मै यस्मै
च । चाह महञ्च चाहम् । अहङ् खनामि खना म्यह महङ् खनामि । खनामि वो

व : खनामि-खनामि व : । व इति व : ।। द्विपच्चतुष्प च्चतु : पद् द्विपद्
द्विपच्चतुष्पत् । द्विपदिति द्वि = पत् । चतुष्प दस्माक मस्माकञ् चतु : पच्चतुष्प
दस्माकम् । चतु : पदिति चतु : - पत् । अस्माकाँ सर्वꣳ सर्व मस्माक
मस्माकाँ सर्वम् । सर्व मस्त्वस्तु सर्वꣳ सर्व मस्तु । अस्त्वनातुर मनातुर
मस्त्वस्त्वनातुरम् । अनातुरमित्य नातुरम् ।। ओषधय स्सꣳ स मोषधय ओषधय
स्सम् । सँ वदन्ते वदन्ते सꣳ सँ वदन्ते । वदन्ते सोमेन सोमेन वदन्ते वदन्ते
सोमेन । सोमेन सह सह सोमेन सोमेन सह । सह राज्ञा राज्ञा सह सह राज्ञा ।

राज्ञेति राज्ञा ।। यस्मै कृणोति कृणोति यस्मै यस्मै कृणोति । कृणोति ब्राह्मणो
ब्राह्मण ः कृणोति कृणोति ब्राह्मण ः । ब्राह्मण स्त न्तं ब्राह्मणो ब्राह्मण स्तम् ।
ताँ राजन् राजꣳ स्त न्ताँ राजन् । राजन् पारयामसि पारयामसि राजन् राजन्
पारयामसि । पारयामसीति पारयामसि ।। त्वाङ् गन्धर्वा गन्धर्वा स्त्वा न्त्वाङ्
गन्धर्वा ः । गन्धर्वा - अखनन्नखनन् गन्धर्वा गन्धर्वा - अखनन् । अखनꣳ स्त्वा
न्त्वा मखनन्नखनꣳ स्त्वाम् । त्वा मिन्द्र इन्द्र स्त्वा न्त्वा मिन्द्र ः । इन्द्र स्त्वा
न्त्वा मिन्द्र इन्द्र स्त्वाम् । त्वां बृहस्पति बृहस्पति स्त्वा न्त्वां बृहस्पति ः ।

बृहस्पति रिति बृहस्पतिः ।। त्वा मौषध ओषधे त्वा न्त्वा मौषधे । ओषधे सोम स्सोम ओषध ओषधे सोम : । सोमो राजा राजा सोम स्सोमो राजा । राजा विद्वान् विद्वान् राजा राजा विद्वान् । विद्वान् यक्ष्मा द्यक्ष्माद् विद्वान् विद्वान् यक्ष्मात् । यक्ष्मा दमुच्यता मुच्यत यक्ष्मा द्यक्ष्मा दमुच्यत । अमुच्यतेत्य मुच्यत।। त्व मुत्तमो त्तमा त्व न्त्व मुत्तमा । उत्तमा ऽस्यस्युत्तमो त्तमा ऽसि । उत्तमेत्युत् = तमा । अस्योषध ओषधे ऽस्यस्योषधे । ओषधे तव तवौषध ओषधे तव । तव वृक्षा वृक्षा स्तव तव वृक्षा : । वृक्षा - उपस्तय उपस्तयो वृक्षा वृक्षा -

उपस्तय : । उपस्तय इत्युपस्तय : ।। उपस्ति रस्त्वस्तू पस्ति रुपस्ति रस्तु ।
अस्तु स सो ऽस्त्वस्तु स : । सो ऽस्माक मस्माकꣳ स सो ऽस्माकम् । अस्माकँ
य्यो यो ऽस्माक मस्माकँ य्य : । यो - अस्मा नस्मान्यो यो - अस्मान् । अस्माँ
- अभिदासत्यभिदास त्यस्मा नस्माँ - अभिदासति । अभिदासतीत्यभि = दासति
।।६।।

मा मा मा मा मा मा । मा हीँसीद् धिꣳसीन् मा मा हीँसीत् । हीँसीज्ञनिता
जनिता हिꣳसीद् धीँसीज्ञनिता । जनिता यो यो जनिता जनिता य : । य :

पृथिव्या : पृथिव्या यो य : पृथिव्या : । पृथिव्या यो य : पृथिव्या : पृथिव्या
य : । यो वा वा यो यो वा । वा दिवन् दिवं वा वा दिवम् । दिवाँ सत्यधर्मा
सत्यधर्मा दिवन् दिवाँ सत्यधर्मा । सत्यधर्मा वि वि सत्यधर्मा सत्यधर्मा वि ।
सत्यधर्मेति सत्य = धर्मा । व्यानळा नड्विव्यानट् । आनळित्यानट् ।। यश्च च
यो यश्च । चापो ऽपश्च चाप : । अप श्चन्द्रा श्चन्द्रा - अपो ऽप श्चन्द्रा : ।
चन्द्रा : प्रथम : प्रथम श्चन्द्रा श्चन्द्रा : प्रथम : । प्रथमो जजान जजान प्रथम :
प्रथमो जजान । जजान कस्मै कस्मै जजान जजान कस्मै । कस्मै देवाय देवाय

कस्मै कस्मै देवाय । देवाय हविषा हविषा देवाय देवाय हविषा । हविषा विधेम
विधेम हविषा हविषा विधेम । विधेमेति विधेम ।। अभ्या वर्तस्व वर्तस्वा भ्यभ्या
वर्तस्व । आवर्तस्व । वर्तस्व पृथिवि पृथिवि वर्तस्व वर्तस्व पृथिवि । पृथिवि
यज्ञेन यज्ञेन पृथिवि पृथिवि यज्ञेन । यज्ञेन पयसा पयसा यज्ञेन यज्ञेन पयसा ।
पयसा सह सह पयसा पयसा सह । सहेति सह ।। वपा न्ते ते वपाँ वपान्ते । ते
- अग्नि रग्नि स्ते ते - अग्नि ः । अग्नि रिषित इषितो ऽग्नि रग्नि रिषित ः ।
इषितो - अरोह दरोह दिषित इषितो - अरोहत् । अरोहदित्य रोहत् ।। अग्ने

यद्य दग्ने ऽग्ने यत् । यत्ते ते यद्यत्ते । ते शुक्रꣳ शुक्रन्ते ते शुक्रम् । शुक्रञ् चन्द्रञ् चन्द्रꣳ शुक्रꣳ शुक्रञ् चन्द्रम् । चन्द्रं पूतं पूतञ् चन्द्रञ् चन्द्रं पूतम् । पूत ञ्च च पूतं पूत ञ्च। च यज्ञियँ य्यज्ञियं ञ्च च यज्ञियम् । यज्ञिय मिति यज्ञियम् ।। तद् देवेभ्यो देवेभ्य स्तत्तद् देवेभ्य : । देवेभ्यो भरामसि भरामसि देवेभ्यो देवेभ्यो भरामसि । भरामसीति भरामसि ।। इष मूर्ज मूर्ज मिष मिष मूर्जम् । ऊर्ज मह मह मूर्ज मूर्ज महम् । अह मित इतो ऽह मह मित : । इत आद माद मित इत आदम् । आद मृतस्य ऋतस्याद माद मृतस्य । ऋतस्य योनिँ य्योनि मृतस्य

ऋतस्य योनिम् । योनिम् महिषस्य महिषस्य योनिँ य्योनिम् महिषस्य ।
महिंषस्य धारान् धाराम् महिषस्य महिषस्य धाराम् । धारामिति धाराम् ।। आमा
मा मा । मा गोषु गोषु मा मा गोषु । गोषु विशतु विशतु गोषु गोषु विशतु ।
विशत्वा तनूषु तनूष्वा विशतु विशत्वा तनूषु । आ तनूषु । तनूषु जहामि
जहामि तनूषु तनूषु जहामि । जहामि सेदिँ सेदिञ्जहामि जहामि सेदिम् । सेदि
मनिरा मनिराँ सेदिँ सेदि मनिराम् । अनिरा ममीवा ममीवा मनिरा मनिरा
ममीवाम् । अमीवा मित्यमीवाम् ।। अग्ने तव तवाग्ने ऽग्ने तव । तव श्रव श्श्रव

स्तव तव श्रवः । श्रवो वयो वय श्श्रव श्रवो वयः । वयो महि महि वयो वयो महि । महि भ्राजन्ते भ्राजन्ते महि महि भ्राजन्ते । भ्राजन्ते - अर्चयो ऽर्चयो भ्राजन्ते भ्राजन्ते - अर्चयः । अर्चयो विभावसो विभावसो ऽर्चयो ऽर्चयो विभावसो । विभावसो इति विभा = वसो ।। बृहद्भानो शवसा शवसा बृहद्भानो बृहद्भानो शवसा । बृहद्भानो इति बृहत् = भानो । शवसा वाजँ वाजꣳ शवसा शवसा वाजम् । वाज मुक्थ्य मुक्थ्यँ वाजँ वाज मुक्थ्यम् । उक्थ्यन् दधासि दधास्युक्थ्य मुक्थ्यन् दधासि । दधासि दाशुषे दाशुषे दधासि दधासि दाशुषे ।

दाशुषे कवे कवे दाशुषे दाशुषे कवे । कव इति कवे ।। पावकवर्चा श्शुक्रवर्चा
श्शुक्रवर्चा ः पावकवर्चा ः पावकवर्चा श्शुक्रवर्चा ः । पावकवर्चा इति पावक =
वर्चा ः । शुक्रवर्चा - अनूनवर्चा - अनूनवर्चा श्शुक्रवर्चा श्शुक्रवर्चा -
अनूनवर्चा ः । शुक्रवर्चा इति शुक्र = वर्चा ः । अनूनवर्चा - उदु दनूनवर्चा -
अनूनवर्चा - उत् । अनूनवर्चा इत्यनून = वर्चा ः । उदियर्षी यर्ष्युदुदियर्षि ।
इयर्षि भानुना भानुने यर्षी यर्षि भानुना । भानुनेति भानुना ।। पुत्रो मातरा
मातरा पुत्र ः पुत्रो मातरा । मातरा विचरन् विचरन् मातरा मातरा विचरन् ।

विचर न्नुपोप विचरन् विचरन्नुप । विचरन्निति वि = चरन् । उपा वस्यवस्युपोपा
वसि । अवसि पृनक्षि पृनक्ष्यवस्यवसि पृनक्षि । पृनक्षि रोदसी रोदसी पृनक्षि
पृनक्षि रोदसी । रोदसी - उभे - उभे रोदसी रोदसी - उभे । रोदसी इति
रोदसी । उभे इत्युभे ।। ऊर्जो नपान्नपा दूर्ज ऊर्जो नपात् । नपाज्ञातवेदो
जातवेदो नपान्नपा ज्ञातवेद : । जातवेद स्सुशस्तिभि स्सुशस्तिभि र्जातवेदो
जातवेद स्सुशस्तिभि : । जातवेद इति जात = वेद : । सुशस्तिभि र्मन्दस्व
मन्दस्व सुशस्तिभि स्सुशस्तिभि र्मन्दस्व । सुशस्तिभि रिति सुशस्ति = भि : ।

मन्दस्व धीतिभिं र्धीतिभि र्मन्दस्व मन्दस्व धीतिभिं : । धीतिभिं र्हितो हितो धीतिभिं र्धीतिभिं र्हित : । धीतिभि रितिं धीति = भिं : । हित इतिं हित : ।।

त्वे - इष इष स्त्वे त्वे - इषं : । त्वे इति त्वे । इष स्स८ स मिष इष स्सम् । सन्दंधु र्दधु स्स८ सन्दंधु : । दधु र्भूरिंवर्पसो भूरिंवर्पसो दधु र्दधु र्भूरिंवर्पस : । भूरिंवर्पस श्चित्रोतंय श्चित्रोतंयो भूरिंवर्पसो भूरिंवर्पस श्चित्रोतंय : । भूरिंवर्पस इति भूरिं = वर्पस : । चित्रोतंयो वामजांता वामजांता श्चित्रोतंय श्चित्रोतंयो वामजांता : । चित्रोतंय इतिं चित्र = ऊतय : । वामजांता इतिं वाम =

जाता ः ।। इरज्यन्नग्ने ऽग्न इरज्यन्निरज्यन्नग्ने । अग्ने प्रथयस्व प्रथयस्वाग्ने ऽग्ने प्रथयस्व । प्रथयस्व जन्तुभि र्जन्तुभि ः प्रथयस्व प्रथयस्व जन्तुभि ः । जन्तुभि रस्मे - अस्मे जन्तुभि र्जन्तुभि रस्मे । जन्तुभि रिति जन्तु = भि ः । अस्मे रायो रायो ऽस्मे - अस्मे राय ः । अस्मे इत्यस्मे । रायो - अमर्त्यामर्त्य रायो रायो - अमर्त्य । अमर्त्ये त्यमर्त्य ।। सदर्शतस्य दर्शतस्य स सदर्शतस्य । दर्शतस्य वपुषो वपुषो दर्शतस्य दर्शतस्य वपुष ः । वपुषो वि वि वपुषो वपुषो वि । वि राजसि राजसि वि वि राजसि । राजसि पृनक्षि पृनक्षि राजसि राजसि पृनक्षि । पृनक्षि

सानसिं॑ सानसिं पृनक्षिं पृनक्षिं सानसिम् । सानसिङ् क्रतुङ् क्रतुं॑ सानसिं॑
सानसिङ् क्रतुम् । क्रतु मिति क्रतुम् ।। इष्कर्तार मध्वरस्या ध्वरस्यैष्कर्तार
मिष्कर्तार मध्वरस्य । अध्वरस्य प्रचेतसं प्रचेतस मध्वरस्या ध्वरस्य प्रचेतसम् ।
प्रचेतसङ् क्षयन्तङ् क्षयन्तं प्रचेतसं प्रचेतसङ् क्षयन्तम् । प्रचेतस मिति प्र =
चेतसम् । क्षयन्ताँ राधसो राधस : क्षयन्तङ् क्षयन्ताँ राधस : । राधसो महो
महो राधसो राधसो मह : । मह इति मह : ।। रातिँ वामस्य वामस्य रातिं॑
रातिँ वामस्य । वामस्य सुभगां॑ सुभगाँ वामस्य वामस्य सुभगाम् । सुभगाम्

महीं महीꣳ सुभगाꣳ सुभगाम् महीम् । सुभगा मिति सु = भगाम् । मही मिष

मिषम् महीं मही मिषम् । इषन् दधासि दधासीष मिषन् दधासि । दधासि

सानसिꣳ सानसिन् दधासि दधासि सानसिम् । सानसीँ रयिꣳ रयिꣳ सानसिꣳ

सानसीँ रयिम् । रयिमिति रयिम् ।। ऋतावानं महिषं महिष मृतवान मृतावानं

महिषम् । ऋतवान मित्यृत = वानम् । महिषँ विश्वदर्शतँ विश्वदर्शतं महिषं

महिषँ विश्वदर्शतम् । विश्वदर्शत मग्नि मग्निँ विश्वदर्शतँ विश्वदर्शत मग्निम् ।

विश्वदर्शत मिति विश्व = दर्शतम् । अग्नीँ सुम्नाय सुम्ना याग्नि मग्नीँ सुम्नाय ।

सुम्नाय दधिरे दधिरे सुम्नाय सुम्नाय दधिरे । दधिरे पुर ः पुरो दधिरे दधिरे पुर ः । पुरो जना जना ः पुर ः पुरो जना ः । जना इति जना ः ।। श्रुत्कर्णाँ सप्रथस्तमं सप्रथस्तमं श्रुत्कर्णं श्रुत्कर्णाँ सप्रथस्तमम् । श्रुत्कर्ण मिति श्रुत् = कर्णम् । सप्रथस्तम न्त्वा त्वा सप्रथस्तमं सप्रथस्तम न्त्वा । सप्रथस्तम मिति सप्रथ ः = तमम् । त्वा गिरा गिरा त्वा त्वा गिरा । गिरा दैव्यन् दैव्यङ् गिरा गिरा दैव्यम् । दैव्यं मानुषा मानुषा दैव्यन् दैव्यं मानुषा । मानुषा युगा युगा मानुषा मानुषा युगा । युगेति युगा ।। आप्यायस्व प्यायस्वा प्यायस्व । प्यायस्व

स॑ं सं प्यायस्व प्यायस्व सम् । समेत्वेतु स॑ं समेतु । एतु ते त एत्वेतु ते । ते
विश्वतो विश्वत स्ते ते विश्वत ः । विश्वत स्सोम सोम विश्वतो विश्वत स्सोम ।
सोम वृष्ण्यँ वृष्ण्य॑ं सोम सोम वृष्ण्यम् । वृष्ण्य मिति वृष्ण्यम् ।। भवा वाजस्य
वाजस्य भव भवा वाजस्य । वाजस्य सङ्गथे सङ्गथे वाजस्य वाजस्य सङ्गथे ।
सङ्गथ इति सं = गथे ।। सन्ते ते स॑ं सन्ते । ते पया॑ंसि पया॑ंसि ते ते
पया॑ंसि । पया॑ंसि स॑ं सं पया॑ंसि पया॑ंसि सम् । समुयन्तु यन्तू स॑ं
समुयन्तु । ॐ इत्यूँ । यन्तु वाजा वाजा यन्तु यन्तु वाजा ः । वाजा स्स॑ं सँ

वाजा वाजा स्सम् । सँ वृष्ण्यानि वृष्ण्यानि सꣳ सँ वृष्ण्यानि । वृष्ण्यान्यभि
मातिषाहो ऽभिमाति सहो वृष्ण्यानि वृष्ण्यान्यभिमातिषाह ः । अभिमातिसह
इत्यभिमाति = सह ः ।। आप्यायमानो - अमृता यामृता याप्यायमान आप्याय
मानो - अमृताय । आप्यायमान इत्या = प्यायमान ः । अमृताय सोम
सोमामृता यामृताय सोम । सोम दिवि दिवि सोम सोम दिवि । दिवि श्रवाꣳसि
श्रवाꣳसि दिवि दिवि श्रवाꣳसि । श्रवाꣳ स्युत्तमान्युत्तमानि श्रवाꣳसि
श्रवाꣳस्युत्तमानि । उत्तमानि धिष्व धिष्वोत्तमान्युत्तमानि धिष्व । उत्तमानीत्युत्

= तमानि । धिष्वेति धिष्व ।। आप्यायस्व प्यायस्वा प्यायस्व । प्यायस्व मदिन्तम मदिन्तम प्यायस्व प्यायस्व मदिन्तम । मदिन्तम सोम सोम मदिन्तम मदिन्तम सोम । मदिन्तमेति मदिन् = तम । सोम विश्वेभि र्विश्वेभि स्तोम सोम विश्वेभि : । विश्वेभि राँशुभि रꣳशुभि र्विश्वेभि र्विश्वेभि राँशुभि : । आँशुभि रित्याँशु = भि : ।। भवा नो नो भव भवा न : । न स्सप्रथस्तम स्सप्रथस्तमो नो न स्सप्रथस्तम : । सप्रथस्तम स्सखा सखा सप्रथस्तम स्सप्रथस्तम स्सखा । सप्रथस्तम इति सप्रथ : = तम : । सखा वृधे वृधे सखा सखा वृधे । वृध इति

वृधे ।। आ तें त आतें । ते वत्सो वत्स स्तें ते वत्स : । वत्सो मनो मनों वत्सो
वत्सो मनं : । मनों यमद्यमन् मनो मनों यमत् । यमत्परमात् परमा द्यमद्यमत्
परमात् । परमाच्चिंच्चित्परमा त्परमाच्चिंत् । चित्सधस्था त्सधस्थाच्चि च्चित्स
धस्थात् । सधस्था दिर्ति सध = स्थात् ।। अग्ने त्वाङ्कांमया त्वाङ्कांमया ऽग्ने
ऽग्ने त्वाङ्कांमया । त्वाङ्कांमया गिरा गिरा त्वाङ्कांमया त्वाङ्कांमया गिरा ।
त्वाङ्कांमयेति त्वां = कांमया । गिरेर्ति गिरा ।। तुभ्य न्तास्ता स्तुभ्य न्तुभ्य
न्ता : । ता - अंङ्गिरस्तमा ङ्गिरस्तम तास्ता - अंङ्गिरस्तम । अङ्गिरस्तम विश्वा

विश्वा - अङ्गिरस्तमा ङ्गिरस्तम विश्वा : । अङ्गिरस्तमेत्यङ्गिर : = तम । विश्वा
स्सुक्षितय स्सुक्षितयो विश्वा विश्वा स्सुक्षितय : । सुक्षितय : पृथक् पृथक्सुक्षितय
स्सुक्षितय : पृथक् । सुक्षितय इति सु = क्षितय : । पृथगिति पृथक् ।। अग्ने
कामाय कामायाग्ने ऽग्ने कामाय । कामाय येमिरे येमिरे कामाय कामाय येमिरे ।
येमिर इति येमिरे ।। अग्नि : प्रियेषु प्रियेष्वग्नि रग्नि : प्रियेषु । प्रियेषु धामसु
धामसु प्रियेषु प्रियेषु धामसु । धामसु काम : कामो धामसु धामसु काम : ।
धामस्विति धाम = सु । कामो भूतस्य भूतस्य काम : कामो भूतस्य । भूतस्य

भव्यस्य भव्यस्य भूतस्य भूतस्य भव्यस्य । भव्यस्येति भव्यस्य ।। सम्राळेक एक स्सम्राट् सम्राळेक : । सम्राळिति सं = राट् । एको विव्येक एको वि । विराजति राजति वि विराजति । राजतीति राजति ।।७।।

## इति त्रयोदशोऽध्याय :

# अथ चतुर्दशोऽध्याय :

ॐ मयि गृण्हामि गृण्हामि मयि मयि गृण्हामि । गृण्हाम्यग्रे ऽग्रे गृण्हामि गृण्हाम्यग्रे । अग्रे - अग्नि मग्नि मग्रे ऽग्रे - अग्निम् । अग्नीँ रायो रायो ऽग्नि मग्नीँ राय : । राय स्पोषाय पोषाय रायो राय स्पोषाय । पोषाय सुप्रजास्त्वाय सुप्र जास्त्वाय पोषाय पोषाय सुप्रजास्त्वाय । सुप्रजास्त्वाय सुवीर्याय सुवीर्याय सुप्रजा स्त्वाय सुप्रजास्त्वाय सुवीर्याय । सुप्रजास्त्वायेति सुप्रजा : = त्वाय । सुवीर्यायेति सु = वीर्याय ।। मामु देवता देवता - उमां मामु देवता : । ऊँइत्यूँ । देवता

स्सचन्ताꣳ सचन्तान् देवता देवता स्सचन्ताम् । सचन्तामिति सचन्ताम् ।। ब्रह्म जज्ञानञ् जज्ञानं ब्रह्म ब्रह्म जज्ञानम् । जज्ञानं प्रथमं प्रथमञ् जज्ञानञ् जज्ञानं प्रथमम् । प्रथमं पुरस्तात् पुरस्तात् प्रथमं प्रथमं पुरस्तात् । पुरस्ता द्विवि पुरस्तात् पुरस्ताद्वि । वि सीमत स्सीमतो वि वि सीमत : । सीमत स्सुरुच स्सुरुच स्सीमत स्सीमत स्सुरुच : । सुरुचो वेनो वेन स्सुरुच स्सुरुचो वेन : । सुरुच इति सु = रुच : । वेन आव राव वेनो वेन आव : । आवरित्याव : ।। स बुध्न्या बुध्न्या स्स स बुध्न्या : । बुध्न्या - उपमा - उपमा बुध्न्या बुध्न्या उपमा : । उपमा

- अस्यास्योपमा - उपमा - अस्य । उपमा इत्युप = मा ः । अस्यविष्ठा विस्था
- अस्यास्य विष्ठा ः । विष्ठा स्सत स्सतो विस्था विष्ठा स्सत ः । विस्था इति वि
= स्था ः । सतश्च च सत स्सतश्च । च योनिँ य्योनिश्च च योनिम् । योनि
मसतो ऽसतो योनिँ य्योनि मसत ः । असत श्च चासतो ऽसतश्च । च वि वि च
च वि । वि व र्व विं वि व ः । वरिति व ः ।। हिरण्यगर्भ स्सऽ सऽ
हिरण्यगर्भो हिरण्यगर्भ स्सम् । हिरण्यगर्भ इति हिरण्य = गर्भ ः । स मवर्तता
वर्तत सऽ समवर्तत । अवर्तताग्रे ऽग्रे ऽवर्तता वर्तताग्रे । अग्रे भूतस्य भूतस्याग्रे

ऽग्रे भूतस्य । भूतस्य जातो जातो भूतस्य भूतस्य जात : । जात : पति : पति
र्जातो जात : पति : । पति रेक एक : पति : पति रेक : । एक आसीदासी
देक एक आसीत् । आसीदित्यासीत् ।। स दाधार दाधार स स दाधार । दाधार
पृथिवीं पृथिवीन् दाधार दाधार पृथिवीम् । पृथिवीन् द्यान् द्यां पृथिवीं पृथिवीन्
द्याम् । द्या मुतोत द्यान् द्यामुत । उतेमा मिमा मुतोतेमाम् । इमाङ् कस्मै कस्मा
- इमा मिमाङ् कस्मै । कस्मै देवाय देवाय कस्मै कस्मै देवाय । देवाय हविषा
हविषा देवाय देवाय हविषा । हविषा विधेम विधेम हविषा हविषा विधेम ।

विधेमेति विधेम ।। द्रप्सश्च स्कन्द चस्कन्द द्रप्सो द्रप्सश्चस्कन्द । चस्कन्द पृथिवीं पृथिवीञ् चस्कन्द चस्कन्द पृथिवीम् । पृथिवी मन्वनु पृथिवीं पृथिवीमनु । अनु द्यान्द्या मन्वनु द्याम् । द्या मिम मिमन्द्यान् द्या मिमम् । इमञ्च चेम मिमञ्च । च योनिँ य्योनि ञ्च च योनिम् । योनि मन्वनु योनिँ य्योनि मनु । अनु यो यो ऽन्वनु य ः । यश्चच यो यश्च । च पूर्व ः पूर्वश्च च पूर्व ः । पूर्व इति पूर्व ः ।। समानँ योनिँ य्योनिꣳ समानꣳ समानँ योनिम् । योनि मन्वनु योनिँ य्योनि मनु । अनु सञ्चरन्तꣳ सञ्चरन्त मन्वनु सञ्चरन्तम् । सञ्चरन्तन् द्रप्सन् द्रप्सꣳ सञ्चरन्तꣳ

सञ्चरन्तन् द्रप्सम् । सञ्चरन्त मिति सं = चरन्तम् । द्रप्सञ्जुहोमि जुहोमि द्रप्सन्

द्रप्सञ् जुहोमि । जुहोम्यन्वनु जुहोमि जुहोम्यनु । अनु सप्त सप्तान्वनु सप्त । सप्त

होत्रा होत्रा स्सप्त सप्त होत्रा : । होत्रा इति होत्रा : ।। नमो ऽस्त्वस्तु नमो

नमोऽस्तु । अस्तु सर्पेभ्य स्सर्पेभ्यो ऽस्त्वस्तु सर्पेभ्य : । सर्पेभ्यो ये ये सर्पेभ्य

स्सर्पेभ्यो ये । ये के के ये ये के । के च च के के च । च पृथिवीं पृथिवी ञ्च

च पृथिवीम् । पृथिवी मन्वनु पृथिवीं पृथिवी मनु । अन्वित्यनु ।। ये - अन्तरिक्षे

ऽन्तरिक्षे ये ये - अन्तरिक्षे । अन्तरिक्षे ये ये ऽन्तरिक्षे ऽन्तरिक्षे ये । ये दिवि

दिवि ये ये दिवि । दिवि तेभ्य स्तेभ्यो दिवि दिवि तेभ्य : । तेभ्य स्सर्पेभ्य
स्सर्पेभ्य स्तेभ्य स्तेभ्य स्सर्पेभ्य : । सर्पेभ्यो नमो नम स्सर्पेभ्य स्सर्पेभ्यो नम : ।
नम इति नम : ।। या - इषव इषवो या या - इषव : । इषवो यातुधानानाँ
य्यातुधानाना मिषव इषवो यातुधानानाम् । यातुधानानाँ ये ये यातुधानानाँ
य्यातुधानानाँ य्ये । यातुधानाना मिति यातु = धानानाम् । ये वा वा ये ये वा ।
वा वनस्पती न्वनस्पती न्वा वा वनस्पतीन् । वनस्पतीꣳ रन्वनु वनस्पती
न्वनस्पतीꣳ रनु । अन्वित्यनु ।। ये वा वा ये ये वा । वा ऽवटेष्व वटेषु वा वा

ऽवटेषु । अवटेषु शेरते शेरते ऽवटेष्ववटेषु शेरते । शेरते तेभ्य स्तेभ्य श्शेरते
शेरते तेभ्य: । तेभ्य स्सर्पेभ्य स्सर्पेभ्य स्तेभ्य स्तेभ्य स्सर्पेभ्य: । सर्पेभ्यो नमो
नम स्सर्पेभ्य स्सर्पेभ्यो नम: । नम इति नम: ।। ये वा वा ये ये वा । वाऽमी
- अमी वा वा ऽमी । अमी रोचने रोचने ऽमी - अमी रोचने । अमी इत्यमी ।
रोचने दिवो दिवो रोचने रोचने दिव: । दिवो ये ये दिवो दिवो ये । ये वा वा
ये ये वा । वा सूर्यस्य सूर्यस्य वा वा सूर्यस्य । सूर्यस्य रश्मिषु रश्मिषु सूर्यस्य
सूर्यस्य रश्मिषु । रश्मिष्विति रश्मिषु ।। येषा मप्स्वप्सु येषाँ य्येषा मप्सु । अप्सु

सद स्सदो ऽप्स्वप्सु सद : । अप्स्वित्यप् = सु । सद स्कृतङ् कृतꣳ सद स्सद स्कृतम् । कृतन् तेभ्य स्तेभ्य : कृतङ् कृतन् तेभ्य : । तेभ्य स्सर्पेभ्य स्सर्पेभ्य स्तेभ्य स्तेभ्य स्सर्पेभ्य : । सर्पेभ्यो नमो नम स्सर्पेभ्य स्सर्पेभ्यो नम : । नम इति नम : ।। कृणुष्व पाज : पाज : कृणुष्व कृणुष्व पाज : । पाज : प्रसितिं प्रसितिं पाज : पाज : प्रसितिम् । प्रसिति न्न न प्रसितिं प्रसिति न्न । प्रसिति मिति प्र = सितिम् । न पृथ्वीं पृथ्वी न्न न पृथ्वीम् । पृथ्वीं य्याहि याहि पृथ्वीं पृथ्वीं य्याहि । याहि राजेव राजेव याहि याहि राजेव । राजेवा मवा नमवान्

राजेव राजेवा मवान् । राजेवेति राजा = इव । अमवाँ - इभेने भेना मवा नमवाँ - इभेन । अमवा नित्यम = वान् । इभेनेतीभेन ।। तृष्वी मन्वनु तृष्वीन् तृष्वी मनु । अनु प्रसितिं प्रसिति मन्वनु प्रसितिम् । प्रसितिन् द्रूणानो द्रूणान : प्रसितिं प्रसितिन् द्रूणान : । प्रसिति मिति प्र = सितिम् । द्रूणानो ऽस्ता ऽस्ता द्रूणानो द्रूणानो ऽस्ता । अस्ता ऽस्यस्यस्ता ऽस्ता ऽसि । असि विध्य विध्या ऽस्यसि विध्य । विध्य रक्षसो रक्षसो विध्य विध्य रक्षस : । रक्षस स्तपिष्ठै स्तपिष्ठै रक्षसो रक्षस स्तपिष्ठै : । तपिष्ठै रिति तपिष्ठै : ।। तव भ्रमासो भ्रमास स्तव तव

भ्रमास : । भ्रमास आशुया ऽऽशुया भ्रमासो भ्रमास आशुया । आशुया पतन्ति
पतन्त्याशुया ऽऽशुया पतन्ति । आशुये त्याशु = या । पतन्त्यन्वनु पतन्ति
पतन्त्यनु । अनु स्पृश स्पृशान्वनु स्पृश । स्पृश धृषता धृषता स्पृश स्पृश धृषता।
धृषता शोशुचान श्शोशुचानो धृषता धृषता शोशुचान : । शोशुचान इति
शोशुचान : ।। तपूꣳष्यग्ने ऽग्ने तपूꣳषि तपूꣳष्यग्ने । अग्ने जुह्वा जुह्वा ऽग्ने ऽग्ने
जुह्वा । जुह्वा पतङ्गान् पतङ्गान् जुह्वा जुह्वा पतङ्गान् । पतङ्गा नसन्दितो
ऽसन्दित : पतङ्गान् पतङ्गा नसन्दित : । असन्दितो विव्यसन्दितोऽसन्दितो वि ।

असंन्दित इत्यसंम् = दित : । वि सृंज सृज वि वि सृंज । सृज विष्वग् विष्वंक्
सृज सृज विष्वंक् । विष्वं गुल्का - उल्का विष्वग् विष्वं गुल्का : । उल्का
इत्युल्का : ।। प्रति स्पश स्स्पश : प्रति प्रति स्पशं : । स्पशो वि वि स्पश
स्स्पशो वि । वि सृंज सृज वि वि सृंज । सृज तूर्णितम स्तूर्णितम स्सृज सृज
तूर्णितम : । तूर्णितमो भव भव तूर्णितम स्तूर्णितमो भवं । तूर्णितम इति तूर्णि
= तम : । भवां पायु : पायु र्भव भवां पायु : । पायु र्विशो विश : पायु :
पायु र्विश : । विशो - अस्या - अस्या विशो विशो - अस्या : । अस्या -

अदब्धो ऽदब्धो ऽस्या - अस्या - अदब्ध : । अदब्ध इत्यदब्ध : ।। यो नो नो
यो यो न : । नो दूरे दूरे नो नो दूरे । दूरे - अघशँसो ऽघशꣳसो दूरे दूरे -
अघशँस : । अघशँसो यो योऽघशꣳसो ऽघशँसो य : । अघशँस इत्यघ =
शँस : । यो - अन्त्यन्ति यो यो - अन्ति । अन्त्यग्ने ग्ने न्त्यन्त्यग्ने । अग्ने माकि
र्माकि रग्ने ऽग्ने माकि : । माकिष्टे ते माकि र्माकिष्टे । तेव्यथि र्व्यथि स्ते ते
व्यथि : । व्यथि रादधर्षीद् दधर्षीदा व्यथि र्व्यथि रादधर्षीत् । आदधर्षीत् ।
दधर्षीदिति दधर्षीत् ।। उदग्ने ऽग्न उदु दग्ने । अग्ने तिष्ठ तिष्ठाग्ने ऽग्ने तिष्ठ । तिष्ठ

प्रति प्रति तिष्ठ तिष्ठ प्रति । प्रत्या तनुष्व तनुष्वा प्रति प्रत्या तनुष्व । आतनुष्व । तनुष्व नि नि तनुष्व तनुष्व नि । न्यमित्रा नमित्रा न्नि न्यमित्रान् । अमित्राँ - ओषता दोषता दमित्रा नमित्राँ - ओषतात् । ओषतात्तिग्महेते तिग्महेत ओषता दोषता त्तिग्महेते । तिग्महेत इति तिग्म = हेते ।। यो नो नो यो यो नः । नो - अराति मराति न्नो नो - अरातिम् । अरातीं समिधान समिधाना राति मरातीं समिधान । समिधान चक्रे चक्रे समिधान समिधान चक्रे । समिधानेति सं = इधान । चक्रे नीचा नीचा चक्रे चक्रे नीचा । नीचा तन्तन्

नीचा नीचा तम् । तन्धक्षि धक्षि तन्तन्धक्षि । धक्ष्यतस मतसन्धक्षि धक्ष्यतसम् ।
अतसन् नना तस मतसन्न । न शुष्कं शुष्कन् न न शुष्कम् । शुष्क मिति
शुष्कम् ।। ऊर्ध्वो भव भवोर्ध्व ऊर्ध्वो भव । भव प्रति प्रति भव भव प्रति ।
प्रति विध्य विध्य प्रति प्रति विध्य । विध्याध्यधि विध्य विध्याधि । अध्यस्म
दस्म दध्यध्यस्मत् । अस्म दावि रावि रस्म दस्म दावि : । आविष्कृणुष्व
कृणुष्वावि राविष्कृणुष्व । कृणुष्व दैव्यानि दैव्यानि कृणुष्व कृणुष्व दैव्यानि ।
दैव्यान्यग्ने ऽग्ने दैव्यानि दैव्यान्यग्ने । अग्न इत्यग्ने ।। अवस्थिरा स्थिराऽवावस्थिरा ।

स्थिरा तनुहि तनुहि स्थिरा स्थिरा तनुहि । तनुहि यातुजूनाँ य्यातुजूनान् तनुहि
तनुहि यातुजूनाम् । यातुजूनाञ् जामिञ् जामिँ य्यातुजूनाँ य्यातुजूना ञ्जामिम् ।
यातुजूना मिति यातु = जूनाम् । जामि मजामि मजामिञ् जामि ञ्जामि
मजामिम् । अजामिं प्र प्राजामि मजामिं प्र । प्र मृणीहि मृणीहि प्र प्र मृणीहि ।
मृणीहि शत्रूञ्छत्रू न्मृणीहि मृणीहि शत्रून् । शत्रूनिति शत्रून् ।। अग्नेष्ट्वा त्वा ऽग्ने
रग्नेष्ट्वा । त्वा तेजसा तेजसा त्वा त्वा तेजसा । तेजसा सादयामि सादयामि
तेजसा तेजसा सादयामि । सादयामीति सादयामि ।। इन्द्रस्य त्वा त्वेन्द्रस्येन्द्रस्य

त्वा । त्वौजसौजसा त्वा त्वौजसा । ओजसा सादयामि सादयाम्योज सौजसा सादयामि । सादयामीति सादयामि ।। भुवो यज्ञस्य यज्ञस्य भुवो भुवो यज्ञस्य । यज्ञस्य रजसो रजसो यज्ञस्य यज्ञस्य रजस ः । रजस श्च च रजसो रजसश्च । च नेता नेता च च नेता । नेता यत्र यत्र नेता नेता यत्र । यत्रा नियुद्भि र्नियुद्भि र्यत्र यत्रा नियुद्भि ः । नियुद्भि स्सचसे सचसे नियुद्भि र्नियुद्भि स्सचसे । नियुद्भि रिति नियुत् = भि ः । सचसे शिवाभि श्शिवाभि स्सचसे सचसे शिवाभि ः । शिवाभि रिति शिवाभि ः ।। दिवि मूर्धानम् मूर्धानन् दिवि दिवि मूर्धानम् । मूर्धानन्

दधिषे दधिषे मूर्धानम् मूर्धानन् दधिषे । दधिषे स्वर्षाꣳ स्वस्सान् दधिषे दधिषे स्वर्षाम् । स्वर्षा ञ्जिह्वा ञ्जिह्वाꣳ स्वस्साꣳ स्वर्षा ञ्जिह्वाम् । स्वस्सामिति स्व = साम् । जिह्वा मग्ने ऽग्ने जिह्वा ञ्जिह्वा मग्ने । अग्ने चकृषे चकृषे ऽग्ने ऽग्ने चकृषे । चकृषे हव्यवाहꣳ हव्यवाह श्चकृषे चकृषे हव्यवाहम् । हव्यवाह मिति हव्य = वाहम् ।।१।।

ध्रुवा ऽस्यसि ध्रुवा ध्रुवा ऽसि । असि धरुणा धरुणा ऽस्यसि धरुणा । धरुणा ऽऽस्तृता ऽऽस्तृता धरुणा धरुणा ऽऽस्तृता । आस्तृता विश्वकर्मणा विश्वकर्मणा ऽऽस्तृता ऽऽस्तृता विश्वकर्मणा । आस्तृतेत्या = स्तृता । विश्वकर्मणा मा मा विश्वकर्मणा विश्वकर्मणा मा । विश्वकर्मणेति विश्व = कर्मणा । मा त्वा त्वा मा मात्वा । त्वा समुद्र स्समुद्र स्त्वात्वा समुद्र : । समुद्र उदुत्समुद्र स्समुद्र उत् । उद्वधीद्वधी दुदुद्वधीत् । वधीन्मा मा वधीद्वधीन्मा । मा सुपर्ण स्सुपर्णो मा मा सुपर्ण : । सुपर्णो ऽव्यथमाना ऽव्यथमाना सुपर्ण स्सुपर्णो ऽव्यथमाना । सुपर्ण

इति सु = पर्ण ः । अव्यथमाना पृथिवीं पृथिवी मव्यथमाना ऽव्यथमाना
पृथिवीम् । पृथिवीन् दृँह दृ९ँह पृथिवीं पृथिवीन् दृँह । दृँह प्रजापति ः प्रजापति
दृ९ँह दृँह प्रजापति ः । प्रजापतिष्ट्वा त्वा प्रजापति ः प्रजापतिष्ट्वा । प्रजापति
रिति प्रजा = पति ः । त्वा सादयतु सादयतु त्वा त्वा सादयतु । सादयत्वपा
मपा९ँ सादयतु सादयत्वपाम् । अपां पृष्ठे पृष्ठे ऽपा मपां पृष्ठे । पृष्ठे समुद्रस्य
समुद्रस्य पृष्ठे पृष्ठे समुद्रस्य । समुद्र स्येमन्नेमन्त्समुद्रस्य समुद्रस्येमन् ।
एमन्व्यचस्वतीं व्यचस्वती मेमन्नेमन्व्यचस्वतीम् । व्यचस्वतीं प्रथस्वतीं प्रथस्वतीं

व्यचस्वतीं व्यचस्वतीं प्रथस्वतीम् । प्रथस्वतीं प्रथस्व प्रथस्व प्रथस्वतीं प्रथस्वतीं
प्रथस्व । प्रथस्व पृथिवी पृथिवी प्रथस्व प्रथस्व पृथिवी । पृथिव्यस्यसि पृथिवी
पृथिव्यसि । असि भूर्भू रस्यसि भू ः । भू र्भूमि र्भूमि र्भू र्भू र्भूमि ः । भूमि
रदिति रदिति र्भूमि र्भूमि रदिति ः । अदिति र्विश्वधाया विश्वधाया - अदिति
रदिति र्विश्वधाया ः । विश्वधाया विश्वस्य विश्वस्य विश्वधाया विश्वधाया विश्वस्य।
विश्वधाया इति विश्व = धाया ः । विश्वस्य भुवनस्य भुवनस्य विश्वस्य विश्वस्य
भुवनस्य । भुवनस्य धर्त्री धर्त्री भुवनस्य भुवनस्य धर्त्री । धर्त्री पृथिवीं पृथिवीन्

धर्त्री धर्त्री पृथिवीम् । पृथिवीँ य्यच्छ यच्छ पृथिवीं पृथिवीँ य्यच्छ । यच्छ पृथिवीं पृथिवीँ य्यच्छ यच्छ पृथिवीम् । पृथिवीन् दृँह दृ॰ह पृथिवीं पृथिवीन् दृँह । दृँह पृथिवीं पृथिवीन् दृ॰ह दृँह पृथिवीम् । पृथिवीं मा मा पृथिवीं पृथिवीं मा । मा हीँसी हिँ॰सी र्मा मा हीँसी ः । हीँसी र्विश्वस्मै विश्वस्मै हि॰सी हीँसी र्विश्वस्मै । विश्वस्मै प्राणाय प्राणाय विश्वस्मै विश्वस्मै प्राणाय । प्राणाया पानाया पानाय प्राणाय प्राणाया पानाय । अपानाय व्यानाय व्यानाया पानाया पानाय व्यानाय । अपानाये त्यप = आनाय । व्यानायो दानायो दानाय व्यानाय

व्यानायो दानाय । व्यानायेति वि = आनाय । उदानाय प्रतिष्ठायै प्रतिस्थाया -
उदानायो दानाय प्रतिष्ठायै । उदानायेत्युत् = आनाय । प्रतिष्ठायै चरित्राय
चरित्राय प्रतिस्थायै प्रतिष्ठायै चरित्राय । प्रतिस्थाया इति प्रति = स्थायै ।
चरित्रायाग्नि रग्नि श्चरित्राय चरित्रा याग्नि ः । अग्निष्ट्वा त्वा ऽग्नि रग्निष्ट्वा ।
त्वाऽभ्यभि त्वा त्वाऽ भि । अभि पातु पात्वभ्यभि पातु । पातु मह्या मह्या
पातु पातु मह्या । मह्या स्वस्त्या स्वस्त्या मह्या मह्या स्वस्त्या । स्वस्त्या
च्छर्दिषा च्छर्दिषा स्वस्त्या स्वस्त्या च्छर्दिषा । छर्दिषा शन्तमेन शन्तमेन

च्छर्दिषा च्छर्दिषा शन्तमेन । शन्तमेन तया तया शन्तमेन शन्तमेन तया । शन्त
मेनेति शं = तमेन । तया देवतया देवतया तया तया देवतया । देवतयाऽङ्गिरस्व
दङ्गिरस्वद् देवतया देवतयाऽङ्गिरस्वत् । अङ्गिरस्वद् ध्रुवा ध्रुवा ऽङ्गिरस्व
दङ्गिरस्वद् ध्रुवा । ध्रुवा सीद सीद ध्रुवा ध्रुवा सीद । सीदेति सीद ।।
काण्डात्काण्डात् प्ररोहन्ती प्ररोहन्ती काण्डात्काण्डात् काण्डात्काण्डात् प्ररोहन्ती ।
काण्डात्काण्डा दिति काण्डात् = काण्डात् । प्ररोहन्ती परुष : परुष : परुष :
परुष : प्ररोहन्ती प्ररोहन्ती परुष : परुष : । प्ररोहन्तीति प्र = रोहन्ती । परुषः

परुष स्परि परि परुष : परुष : परुष : परुष स्परि । परुष : परुष इति परुष : = परुष : । परीति परि ।। एवा नो न एवैवान : । नो दूर्वे दूर्वे नो नो दूर्वे । दूर्वे प्र प्र दूर्वे दूर्वे प्र । प्र तनु तनु प्र प्र तनु । तनु सहस्रेण सहस्रेण तनु तनु सहस्रेण । सहस्रेण शतेन शतेन सहस्रेण सहस्रेण शतेन । शतेन च च शतेन शतेन च । चेतिच ।। या शतेन शतेन या या शतेन । शतेन प्रतनोषि प्रतनोषि शतेन शतेन प्रतनोषि । प्रतनोषि सहस्रेण सहस्रेण प्रतनोषि प्रतनोषि सहस्रेण । प्रतनोषीति प्र = तनोषि । सहस्रेण विरोहसि विरोहसि सहस्रेण सहस्रेण

विरोहसि । विरोह सीति वि = रोहसि ।। तस्यास्ते ते तस्या स्तस्यास्ते । ते

देवि देवि ते ते देवि । देवीष्टक इष्टके देवि देवीष्टके । इष्टके विधेम विधेमेष्टक

इष्टके विधेम । विधेम हविषा हविषा विधेम विधेम हविषा । हविषा वयँ वयꣳ

हविषा हविषा वयम् । वयमिति वयम् ।। यास्ते ते या यास्ते । ते - अग्ने ऽग्ने

ते ते - अग्ने । अग्ने सूर्ये सूर्ये ऽग्ने ऽग्ने सूर्ये । सूर्ये रुचो रुच स्सूर्ये सूर्ये रुच ः ।

रुचो दिवन् दिवꣳ रुचो रुचो दिवम् । दिवमातन्वन्त्या तन्वन्ति दिवन् दिव

मातन्वन्ति । आतन्वन्ति रश्मिभी - रश्मिभि रातन्वन्त्या तन्वन्ति रश्मिभि ः ।

आतन्वन्तीत्या = तन्वन्ति । रश्मिभि रिति रश्मि = भि : ।। ताभिर्नो न स्ताभि स्ताभिर्न : । नो - अद्याद्य नो नो - अद्य । अद्य सर्वाभि स्सर्वाभि रद्याद्य सर्वाभि : । सर्वाभी - रुचे रुचे सर्वाभि स्सर्वाभी - रुचे । रुचे जनाय जनाय रुचे रुचे जनाय । जनाय नो नो जनाय जनाय न : । न स्कृधि कृधि नो नस्कृधि । कृधीति कृधि ।। या वो वो या याव : । वो देवा देवा वो वो देवा : । देवा स्सूर्ये सूर्ये देवा देवा स्सूर्ये । सूर्ये रुचो रुच स्सूर्ये सूर्ये रुच : । रुचो गोषु गोषु रुचो रुचो गोषु । गोष्वश्वेष्वश्वेषु गोषु गोष्वश्वेषु । अश्वेषु या या

- अश्वेष्वश्वेषु या ः । या रुचो रुचो या या रुच ः । रुच इति रुच ः ।। इन्द्राग्नी
ताभि स्ताभि रिन्द्राग्नी - इन्द्राग्नी ताभि ः । इन्द्राग्नी इतीन्द्राग्नी । ताभि स्सर्वाभि
स्सर्वाभि स्ताभि स्ताभि स्सर्वाभि ः । सर्वाभी - रुचꣳ रुचꣳ सर्वाभि स्सर्वाभी -
रुचम् । रुचन्नो नो रुचꣳ रुचन्न ः । नो धत्त धत्त नो नो धत्त । धत्त बृहस्पते
बृहस्पते धत्त धत्त बृहस्पते । बृहस्पत इति बृहस्पते ।। विराड् ज्योति र्ज्योति
र्विराड् विराड् ज्योति ः । विराळिति वि = राट् । ज्योति रधारय दधारय ज्ज्योति
र्ज्योति रधारयत् । अधारयत्स्वराट् स्वराळ धारय दधारयत्स्वराट् । स्वराड् ज्योति

ज्योर्ति स्स्वराट् स्वराड् ज्योति : । स्वराळिति स्व = राट् । ज्योति रधारय
दधारय ज्योति ज्योर्ति रधारयत् । अधारयत् प्रजापति : प्रजापति रधारय
दधारयत् प्रजापति : । प्रजापतिष्ट्वा त्वा प्रजापति : प्रजापतिष्ट्वा । प्रजापति
रिति प्रजा = पति : । त्वा सादयतु सादयतु त्वा त्वा सादयतु । सादयतु पृष्ठे
पृष्ठे सादयतु सादयतु पृष्ठे । पृष्ठे पृथिव्या : पृथिव्या : पृष्ठे पृष्ठे पृथिव्या : ।
पृथिव्या ज्योतिष्मतीञ् ज्योतिष्मतीं पृथिव्या : पृथिव्या ज्योतिष्मतीम् ।
ज्योतिष्मतीँ विश्वस्मै विश्वस्मै ज्योतिष्मतीञ् ज्योतिष्मतीँ विश्वस्मै । विश्वस्मै

प्राणाय प्राणाय विश्वस्मै विश्वस्मै प्राणाय । प्राणाया पानाया पानाय प्राणाय

प्राणाया पानाय । अपानाय व्यानाय व्यानाया पानाया पानाय व्यानाय ।

अपानायेत्यप = आनाय । व्यानाय विश्वँ विश्वँ व्यानाय व्यानाय विश्वम् ।

व्यानायेति वि = आनाय । विश्व ञ्ज्योति र्ज्योति र्विश्वँ विश्व ञ्ज्योति : । ज्योति

र्यच्छ यच्छ ज्योति र्ज्योति र्यच्छ । यच्छाग्नि रग्नि र्यच्छ यच्छाग्नि : । अग्निष्टे ते

ऽग्नि रग्निष्टे । ते ऽधिपति रधिपति स्ते ते ऽधिपति : । अधिपति स्तया तया

ऽधिपति रधिपति स्तया । अधिपति रित्यधि = पति : । तया देवतया देवतया

तया तया देवतया । देवतया ऽङ्गिरस्व दङ्गिरस्वद् देवतया देवतया ऽङ्गिरस्वत् ।
अङ्गिरस्वद् ध्रुवा ध्रुवा ऽङ्गिरस्व दङ्गिरस्वद् ध्रुवा । ध्रुवा सीद सीद ध्रुवा ध्रुवा
सीद । सीद मधु र्मधु स्सीद सीद मधु : । मधुश्च च मधु र्मधुश्च । च माधवो
माधव श्च च माधव : । माधव श्च च माधवो माधवश्च । च वासन्तिकौ
वासन्तिकौ च च वासन्तिकौ । वासन्तिका - ऋतू ऋतू वासन्तिकौ वासन्तिका
- ऋतू । ऋतू - अग्ने रग्ने र्ऋतू ऋतू - अग्ने : । ऋतू इत्यृतू । अग्ने
रन्तश्श्लोषौ ऽन्तश्श्लेषो ऽग्ने रग्ने रन्तश्श्लेष : । अन्तश्श्लेषौ ऽस्यस्यन्तश्श्लेषौ

ऽन्तश्श्लेषो सि । अन्तश्श्लेष इत्यन्त : = श्लेष : । असि कल्पेताङ् कल्पेता मस्यसि कल्पेताम् । कल्पेतान् द्यावापृथिवी द्यावापृथिवी कल्पेताङ् कल्पेतान् द्यावापृथिवी । द्यावापृथिवी कल्पन्ताङ् कल्पन्तान् द्यावापृथिवी द्यावापृथिवी कल्पन्ताम् । द्यावा पृथिवी इति द्यावा पृथिवी । कल्पन्ता माप आप : कल्पन्ताङ् कल्पन्ता माप : । आप ओषधय ओषधय आप आप ओषधय : । ओषधय : कल्पन्ताङ् कल्पन्ता मोषधय ओषधय : कल्पन्ताम् । कल्पन्ता मग्नयो ऽग्नय : कल्पन्ताङ् कल्पन्ता मग्नय : । अग्नय : पृथक् पृथ गग्नयो ऽग्नय :

पृथक् । पृथङ् मम मम पृथक् पृथङ् मम । मम ज्यैष्ठ्याय ज्यैष्ठ्याय मम मम ज्यैष्ठ्याय । ज्यैष्ठ्याय सव्रता स्सव्रता ज्यैष्ठ्याय ज्यैष्ठ्याय सव्रता : । सव्रता ये ये सव्रता स्सव्रता ये । सव्रता इति स = व्रता : । ये - अग्नयो ऽग्नयो ये ये - अग्नय : । अग्नय स्समनस स्समनसो ऽग्नयो ऽग्नय स्समनस : । समनसो ऽन्तरा ऽन्तरा समनस स्समनसो ऽन्तरा । समनस इति स = मनस : । अन्तरा द्यावापृथिवी द्यावापृथिवी - अन्तरा ऽन्तरा द्यावापृथिवी । द्यावापृथिवी - इमे - इमे द्यावापृथिवी द्यावापृथिवी - इमे । द्यावापृथिवी इति द्यावापृथिवी । इमे

वासन्तिकौ वासन्तिका - इमे - इमे वासन्तिकौ । इमे इतीमे । वासन्तिका - ऋतू ऋतू वासन्तिकौ वासन्तिका - ऋतू । ऋतू - अभिकल्पमाना - अभिकल्पमाना - ऋतू ऋतू - अभिकल्पमाना : । ऋतू इत्यृतू । अभिकल्पमाना - इन्द्रमिवेन्द्रमिवा भिकल्पमाना - अभिकल्पमाना - इन्द्रमिव । अभिकल्पमाना इत्यभि = कल्पमाना : । इन्द्रमिव देवा देवा - इन्द्रमिवेन्द्रमिव देवा : । इन्द्रमिवेतीन्द्रम् = इव । देवा - अभिसँविशन्त्वभि सँविशन्तु देवा देवा - अभिसँविशन्तु । अभिसँविशन्तु तया तया ऽभिसँविशन्त्वभि सँविशन्तु तया ।

अभिसँविशन्त्वित्यभि - सँविशन्तु । तया देवतया देवतया तया तया देवतया ।
देवतया ऽङ्गिरस्व दङ्गिरस्वद् देवतया देवतया ऽङ्गिरस्वत् । अङ्गिरस्वद् ध्रुवे ध्रुवे
- अङ्गिरस्व दङ्गिरस्वद् ध्रुवे । ध्रुवे सीदतꣳ सीदतन् ध्रुवे ध्रुवे सीदतम् । ध्रुवे
इति ध्रुवे । सीदतमिति सीदतम् ॥ अषाळ्हा ऽस्यस्यषाळ्हा ऽषाळ्हा ऽसि ।
असि सहमाना सहमाना ऽस्यसि सहमाना । सहमाना सहस्व सहस्व सहमाना
सहमाना सहस्व । सहस्वा राती रराती स्सहस्व सहस्वा राती : । अराती
स्सहस्व सहस्वा राती रराती स्सहस्व । सहस्व पृतनायत : पृतनायत स्सहस्व

सहस्व पृतनायत : । पृतनायत इति पृतना = यत : ।। सहस्र वीर्या ऽस्यसि
सहस्रवीर्या सहस्रवीर्या ऽसि । सहस्रवीर्येति सहस्र = वीर्या । असि सा सा
ऽस्यसि सा । सा मा मा सा सा मा । मा जिन्व जिन्व मा मा जिन्व । जिन्वेति
जिन्व ।। सहस्वेमा - इमा स्सहस्व सहस्वेमा : । इमा - अभिमाती रभिमाती
रिमा - इमा - अभिमाती : । अभिमाती स्सहस्व सहस्वाभिमाती रभिमाती
स्सहस्व । अभिमाती रित्यभि = माती : । सहस्व पृतनायत : पृतनायत
स्सहस्व सहस्व पृतनायत : । पृतनायत इति पृतना = यत : ।। सहस्व सर्वं९

सर्वꣳ सहस्व सहस्व सर्वम् । सर्वम् पाप्मानम् पाप्मानꣳ सर्वꣳ सर्वम् पाप्मानम् । पाप्मानाँ सहमाना सहमाना पाप्मानम् पाप्मानाँ सहमाना । सहमाना ऽस्यसि सहमाना सहमाना ऽसि । अस्योषध ओषधे ऽस्यस्योषधे । ओषध इत्योषधे ।।२।।

मधु वाता वाता मधु मधु वाता : । वाता ऋतायत ऋतयते वाता वाता ऋतायते । ऋतायते मधु मध्वृतयत ऋतायते मधु । ऋतयत इत्यृत = यते ।

मधु क्षरन्ति क्षरन्ति मधु मधु क्षरन्ति । क्षरन्ति सिन्धव स्सिन्धव ः क्षरन्ति क्षरन्ति सिन्धव ः । सिन्धव इति सिन्धव ः ।। माध्वी र्नो नो माध्वी र्माध्वी र्न ः । न स्सन्तु सन्तु नो न स्सन्तु । सन्त्वोषधी रोषधी स्सन्तु सन्त्वोषधी ः । ओषधी रित्योषधी ः ।। मधु नक्तन् नक्तं मधु मधु नक्तम् । नक्त मुतोत नक्तन् नक्त मुत । उतोषस उषस उतोतोषस ः । उषसो मधुमन् मधुम दुषस उषसो मधुमत् । मधुमत् पार्थिवं पार्थिवं मधुमन् मधुमत् पार्थिवम् । मधुम दिति मधु = मत् । पार्थिवाँ रजो रज ः पार्थिवं पार्थिवाँ रज ः । रज इति रज ः ।। मधु द्यौ

द्यौं र्मधु मधु द्यौ ः । द्यौ रस्त्वस्तु द्यौ द्यौं रस्तु । अस्तु नो नो ऽस्त्वस्तु न ः । न ः पिता पिता नों न ः पिता । पितेतिं पिता ।। मधुमान्नो नो मधुमान् मधुमान्न ः । मधुमानिति मधु = मान् । नो वनस्पति र्वनस्पतिं र्नो नो वनस्पतिं ः । वनस्पति र्मधुमान् मधुमान् वनस्पति र्वनस्पतिं र्मधुमान् । मधुमाँ - अस्त्वस्तु मधुमान् मधुमाँ - अस्तु । मधुमा निति मधु = मान् । अस्तु सूर्य स्सूर्यो ऽस्त्वस्तु सूर्य ः । सूर्य इति सूर्य ः ।। माध्वी र्गावो गावो माध्वी र्माध्वी र्गावं ः । गावों भवन्तु भवन्तु गावो गावों भवन्तु । भवन्तु नो नो भवन्तु भवन्तु

न : । न इति न : ।। अपाङ् गम्भन् गम्भन्नपा मपाङ् गम्भन् । गम्भन्त्सीद सीद गम्भन् गम्भन्त्सीद । सीद मा मा सीद सीद मा । मा त्वा त्वा मा मा त्वा । त्वा सूर्य स्सूर्य स्त्वा त्वा सूर्य : । सूर्यो ऽभ्यभि सूर्य स्सूर्यो ऽभि । अभि ताप्सीत्ताप्सी दभ्यभि ताप्सीत् । ताप्सीन्मा मा ताप्सीत्ताप्सीन्मा । मा ऽग्नि रग्नि र्मा मा ऽग्नि : । अग्निर्वैश्वानरो वैश्वानरो ऽग्नि रग्नि र्वैश्वानर : । वैश्वानर इति वैश्वानर : ।। अच्छिन्नपत्रा : प्रजा : प्रजा - अच्छिन्नपत्रा - अच्छिन्नपत्रा : प्रजा : । अच्छिन्न पत्र इत्यच्छिन्न = पत्रा : । प्रजा - अनुवीक्षस्वा नुवीक्षस्व

प्रजा : प्रजा - अनुवीक्षस्व । प्रजा इति प्र = जा : । अनुवीक्षस्वान्वन्वनु
वीक्षस्वानु वीक्षस्वानु । अनुवीक्षस्वेत्यनु = वीक्षस्व । अनु त्वा त्वा ऽन्वनु त्वा ।
त्वा दिव्या दिव्या त्वा त्वा दिव्या । दिव्या वृष्टि र्वृष्टि र्दिव्या दिव्या वृष्टि : ।
वृष्टि स्सचताꣳ सचताँ वृष्टि र्वृष्टि स्सचताम् । सचतामिति सस्चताम् ॥
त्रीन्त्समुद्रा न्त्समुद्राꣳ स्त्रीꣳ स्त्री न्त्समुद्रान् । समुद्रा न्त्सꣳ सꣳ समुद्रा
न्त्समुद्रान्त्सम् । स मसृप दसृपत्सꣳ स मसृपत् । असृपत्स्वर्गा न्त्स्वर्गा नसृप
दसृपत्स्वर्गान् । स्वर्गा नपा मपाꣳ स्वर्गा न्त्स्वर्गा नपाम् । स्वर्गा निति स्व : =

गान् । अपां पति : पतिं रपा मपां पतिं : । पतिं र्वृषभो वृषभ : पति : पतिं र्वृषभ : । वृषभ इष्टकाना मिष्टकानाँ वृषभो वृषभ इष्टकानाम् । इष्टकाना मितीष्टकानाम् ।। पुरीषँ वसानो वसान : पुरीषं पुरीषँ वसान : । वसान स्सुकृतस्य सुकृतस्य वसानो वसान स्सुकृतस्य । सुकृतस्य लोके लोके सुकृतस्य सुकृतस्य लोके । सुकृतस्येति सु = कृतस्य । लोके तत्र तत्र लोके लोके तत्र । तत्र गच्छ गच्छ तत्र तत्र गच्छ । गच्छ यत्र यत्र गच्छ गच्छ यत्र । यत्र पूर्वे पूर्वे यत्र यत्र पूर्वे । पूर्वे परेता : परेता : पूर्वे पूर्वे परेता : । परेता इति परा =

इता : ।। ध्रुवा ऽस्यसि ध्रुवा ध्रुवा ऽसि । असि धरुणा धरुणा ऽस्यसि धरुणा ।
धरुणेत इतो धरुणा धरुणेत : । इतो जज्ञे जज्ञ इत इतो जज्ञे । जज्ञे प्रथमं
प्रथमञ् जज्ञे जज्ञे प्रथमम् । प्रथम मेभ्य एभ्य : प्रथमं प्रथम मेभ्य : । एभ्यो
योनिभ्यो योनिभ्य एभ्य एभ्यो योनिभ्य : । योनिभ्यो - अध्यधि योनिभ्यो
योनिभ्यो - अधि । योनिभ्य इति योनि = भ्य : । अधि जातवेदा जातवेदा -
अध्यधि जातवेदा : । जातवेदा इति जात = वेदा : ।। स गायत्र्या गायत्र्या स
स गायत्र्या । गायत्र्या त्रिष्टुभा त्रिस्तुभा गायत्र्या गायत्र्या त्रिष्टुभा । त्रिष्टुभा

ऽनुष्टुभा ऽनुस्तुभा त्रिस्तुभा त्रिष्टुभा ऽनुष्टुभा । त्रिस्तुभेति त्रि = स्तुभा ।
अनुष्टुभा च चानुस्तुभा ऽनुष्टुभा च । अनुस्तुभेत्यनु = स्तुभा । च देवेभ्यो देवेभ्य
श्च च देवेभ्य ः । देवेभ्यो हव्यꣳ हव्यन् देवेभ्यो देवेभ्यो हव्यम् । हव्यँ वहतु
वहतु हव्यꣳ हव्यँ वहतु । वहतु प्रजानन् प्रजानन् वहतु वहतु प्रजानन् ।
प्रजानन्निति प्र = जानन् । इषे राये राय इष इषे राये । राये रमस्व रमस्व राये
राये रमस्व । रमस्व सहसे सहसे रमस्व रमस्व सहसे । सहसे द्युम्ने द्युम्ने सहसे
सहसे द्युम्ने । द्युम्ने ऊर्ज ऊर्जे द्युम्ने द्युम्न ऊर्जे । ऊर्जे - अपत्याया पत्या योर्ज

ऊर्जे - अपत्याय । अपत्यायेत्यपत्याय ।। सम्राळस्यसि सम्राट् सम्राळसि ।
सम्राळिति सं = राट् । असि स्वराट् स्वराळस्यसि स्वराट् । स्वराळस्यसि स्वराट्
स्वराळसि । स्वराळिति स्व = राट् । असि सारस्वतौ सारस्वता - अस्यसि
सारस्वतौ । सारस्वतौ त्वा त्वा सारस्वतौ सारस्वतौ त्वा । त्वोत्सा उत्सौ त्वा
त्वोत्सौ । उत्सौ प्र प्रोत्सा उत्सौ प्र । प्रा वता मवतां प्र प्रा वताम् ।
अवतामित्यवताम् ।। अग्ने युक्ष्व युक्ष्वाग्ने ऽग्ने युक्ष्व । युक्ष्वा हि हि युक्ष्व युक्ष्वा
हि । हि ये ये हि हि ये । ये तव तव ये ये तव । तवा श्वासो ऽश्वास स्तव

तवाश्वास ः । अश्वासो देव देवाश्वासो ऽश्वासो देव । देव साधवं स्साधवो देव देव साधवं ः । साधव इति साधवं ः ।। अरँ वहन्ति वहन्त्यर मरँ वहन्ति । वहन्ति मन्यवे मन्यवे वहन्ति वहन्ति मन्यवे । मन्यव इति मन्यवे ।। युक्ष्वा हि हि युक्ष्व युक्ष्वाहि । हि देवहूतमान् देवहूतमान् हि हि देवहूतमान् । देवहूतमाँ - अश्वा नश्वान् देवहूतमान् देवहूतमाँ - अश्वान् । देवहूतमा निति देव = हूतमान् । अश्वाँ - अग्ने ऽग्ने ऽश्वा नश्वाँ - अग्ने । अग्ने रथीरिव रथीरिवाग्ने ऽग्ने रथीरिव । रथीरिवेति रथी ः = इव ।। नि होता होता नि नि होता । होता पूर्व्य ः

पूर्व्यो होता होता पूर्व्य : । पूर्व्य स्सद स्सद : पूर्व्य : पूर्व्य स्सद : । सद इति सद : ॥३॥

सम्यक् स्रवन्ति स्रवन्ति सम्यक् सम्यक् स्रवन्ति । स्रवन्ति सरित स्सरित स्स्रवन्ति स्रवन्ति सरित : । सरितो न न सरित स्सरितो न । न धेना धेना न न धेना :। धेना - अन्त रन्त र्धेना धेना - अन्त : । अन्त हृदा हृदाऽन्त रन्त हृदा । हृदा मनसा मनसा हृदा हृदा मनसा । मनसा पूयमाना : पूयमाना मनसा मनसा पूयमाना : । पूयमाना इति पूयमाना : ॥ घृतस्य धारा धारा घृतस्य घृतस्य

धारा : । धारा - अभ्यभि धारा धारा - अभि । अभि चाकशीमि चाकशी

म्यभ्यभि चाकशीमि । चाकशीमि हिरण्ययो हिरण्यय श्चाकशीमि चाकशीमि

हिरण्यय : । हिरण्ययो वेतसो वेतसो हिरण्ययो हिरण्ययो वेतस : । वेतसो मध्ये

मध्ये वेतसो वेतसो मध्ये । मध्ये - अग्ने रग्ने र्मध्ये मध्ये - अग्ने : । अग्ने

रित्यग्ने : ।। ऋचे त्वा त्व ऋच ऋचे त्वा । त्वा रुचे रुचे त्वा त्वा रुचे । रुचे

भासे भासे रुचे रुचे भासे । भासे ज्योतिषे ज्योतिषे भासे भासे ज्योतिषे ।

ज्योतिषे त्वा त्वा ज्योतिषे ज्योतिषे त्वा । त्वेति त्वा ।। अभू दिद मिद मभू

दभू दिदम् । इदँ विश्वस्य विश्वस्येद मिदँ विश्वस्य । विश्वस्य भुवनस्य भुवनस्य विश्वस्य विश्वस्य भुवनस्य । भुवनस्य वाजिनँ वाजिनं भुवनस्य भुवनस्य वाजिनम् । वाजिन मग्ने रग्ने वाजिनँ वाजिन मग्ने : । अग्ने वैश्वानरस्य वैश्वानर स्याग्ने रग्ने वैश्वानरस्य । वैश्वानरस्य च च वैश्वानरस्य वैश्वानरस्य च । चेतिच ॥

अग्नि ज्योतिषा ज्योतिषा ऽग्नि रग्नि ज्योतिषा । ज्योतिषा ज्योतिष्मा ञ्ज्योतिष्मा ञ्ज्योतिषा ज्योतिषा ज्योतिष्मान् । ज्योतिष्मान् रुक्मो रुक्मो ज्योतिष्मा ञ्ज्योतिष्मान् रुक्म : । रुक्मो वर्चसा वर्चसा रुक्मो रुक्मो वर्चसा । वर्चसा

वर्चस्वान् वर्चस्वान् वर्चसा वर्चसा वर्चस्वान् । वर्चस्वा निति वर्चस्वान् ।।
सहस्रदा - अस्यसि सहस्रदा स्सहस्रदा - असि । सहस्रदा इति सहस्र = दा : ।
असि सहस्राय सहस्राया स्यसि सहस्राय । सहस्राय त्वा त्वा सहस्राय सहस्राय
त्वा । त्वेतित्वा ।। आदित्यङ् गर्भङ्गर्भ मादित्य मादित्यङ्गर्भम् । गर्भं पयसा
पयसा गर्भङ् गर्भं पयसा । पयसा सꣳ सं पयसा पयसा सम् । समङ्ध्यङ्धि सꣳ
समङ्धि । अङ्धि सहस्रस्य सहस्र स्याङ्ध्यङ्धि सहस्रस्य । सहस्रस्य प्रतिमां
प्रतिमाꣳ सहस्रस्य सहस्रस्य प्रतिमाम् । प्रतिमाँ विश्वरूपँ विश्वरूपं प्रतिमां प्रतिमाँ

विश्वरूपम् । प्रतिमामिति प्रति = माम् । विश्वरूप मिति विश्व = रूपम् ।। परि वृङ्धि वृङ्धि परि परि वृङ्धि । वृङ्धि हरसा हरसा वृङ्धि वृङ्धि हरसा । हरसा मा मा हरसा हरसा मा । मा ऽभ्यभि मा मा ऽभि । अभि मꣳस्था मꣳस्था - अभ्यभि मꣳस्था : । मꣳस्था श्शतायुषꣳ शतायुषं मꣳस्था मꣳस्था श्शतायुषम् । शतायुषङ् कृणुहि कृणुहि शतायुषꣳ शतायुषङ् कृणुहि । शतायुष मिति शत = आयुषम् । कृणुहि चीयमान श्चीयमान : कृणुहि कृणुहि चीयमान : । चीयमान इति चीयमान : ।। वातस्य जूति ञ्जूतिँ वातस्य वातस्य

जूतिम् । जूतिँ वरुणस्य वरुणस्य जूति ञ्जूतिँ वरुणस्य । वरुणस्य नाभिन् नाभिँ वरुणस्य वरुणस्य नाभिम् । नाभि मश्व मश्वन् नाभिन् नाभि मश्वम् । अश्व ञ्जज्ञान ञ्जज्ञान मश्व मश्व ञ्जज्ञानम् । जज्ञानाँ सरिरस्य सरिरस्य जज्ञान ञ्जज्ञानाँ सरिरस्य । सरिरस्य मध्ये मध्ये सरिरस्य सरिरस्य मध्ये । मध्य इति मध्ये ।। शिशुन् नदीनान् नदीनाꣳ शिशुꣳ शिशुन् नदीनाम् । नदीनाꣳ हरिꣳ हरिन् नदीनान् नदीनाꣳ हरिम् । हरि मद्रिबुध्न मद्रिबुध्नꣳ हरिꣳ हरि मद्रिबुध्नम् । अद्रिबुध्न मग्ने ऽग्ने द्रिबुध्न मद्रिबुध्न मग्ने । अद्रिबुध्न मित्यद्रि = बुध्नम् । अग्ने

मामा ऽग्ने ऽग्ने मा । मा हिंसी र्हिंऽसी र्मा मा हिंसी: । हिंसी: परमे परमे हिंऽसी हिंसी: परमे । परमे व्योमन् व्योमन् परमे परमे व्योमन् । व्योमन्निति वि - ओमन् ।। अजस्र मिन्दु मिन्दु मजस्र मजस्र मिन्दुम् । इन्दु मरुष मरुष मिन्दु मिन्दु मरुषम् । अरुषं भुरण्युं भुरण्यु मरुष मरुषं भुरण्युम् । भुरण्यु मग्नि मग्निं भुरण्युं भुरण्यु मग्निम् । अग्नि मीळ ईळे ऽग्नि मग्नि मीळे । ईळे पूर्वचित्तिं पूर्वचित्ति मीळ ईळे पूर्वचित्तिम् । पूर्वचित्ति न्नमोभि र्नमोभि: पूर्वचित्तिं पूर्वचित्तिन् नमोभि: । पूर्वचित्ति मिति पूर्व = चित्तिम् । नमोभि रिति नम:

परिभू राच्छत् । परिभू रिति परि = भू : । आच्छ न्मनो मन आच्छ
दाच्छन्मन : । आच्छदित्या = छत् । मनो व्यचो व्यचो मनो मनो व्यच : ।
व्यच स्सिन्धु स्सिन्धु र्व्यचो व्यच स्सिन्धु : । सिन्धु स्समुद्र स्समुद्र स्सिन्धु स्सिन्धु
स्समुद्र : । समुद्र स्सरिरᳬ सरिरᳬ समुद्र स्समुद्र स्सरिरम् । सरिरङ् ककुप् ककुप्
सरिरᳬ सरिरङ् ककुप् । ककुप् त्रिककुप् त्रिककुप् ककुप् ककुप् त्रिककुप् ।
त्रिककुप् काव्यङ् काव्यन् त्रिककुप् त्रिककुप् काव्यम् । त्रिककुबिति त्रि =
ककुप् । काव्य मङ्कुप मङ्कुपङ् काव्यङ् काव्य मङ्कुपम् । अङ्कुप

मक्षरपङ्क्ति रक्षरपङ्क्ति रङ्कुप मङ्कुप मक्षरपङ्क्ति : । अक्षरपङ्क्ति : पदपङ्क्ति : पदपङ्क्ति रक्षरपङ्क्ति रक्षरपङ्क्ति : पदपङ्क्ति : । अक्षरपङ्क्ति रित्यक्षर = पङ्क्ति : । पदपङ्क्ति र्विष्टारपङ्क्ति र्विस्तार पङ्क्ति : पदपङ्क्ति : पदपङ्क्ति र्विष्टारपङ्क्ति : । पदपङ्क्ति रिति पद = पङ्क्ति : । विष्टारपङ्क्ति : क्षुर : क्षुरो विस्तारपङ्क्ति र्विष्टारपङ्क्ति : क्षुर : । विस्तारपङ्क्ति रिति विस्तार = पङ्क्ति : । क्षुरो भ्रजो भ्रज : क्षुर : क्षुरो भ्रज : । भ्रज - आच्छ दाच्छद् भ्रजो भ्रज आच्छत् । आच्छत् प्रच्छत् प्रच्छ दाच्छ दाच्छत् प्रच्छत् ।

आच्छदित्या = छत् । प्रच्छ त्सँय्य त्सँय्यत् प्रच्छत् प्रच्छ त्सँय्यत् । प्रच्छदिति
प्र = छत् । सँय्य द्विय द्विय त्सँय्य त्सँय्य द्वियत् । सँय्यदिति सं = यत् । वियद्
बृहद् बृह द्विय द्वियद् बृहत् । वियदिति वि = यत् । बृह द्रथन्तरꣳ रथन्तरं
बृहद् बृहद्रथन्तरम् । रथन्तरन् निकायो निकायो रथन्तरꣳ रथन्तरन् निकाय : ।
रथन्तरमिति रथं = तरम् । निकायो विवधो विवधो निकायो निकायो विवध :।
निकाय इति नि = काय : । विवधो गिरो गिरो विवधो विवधो गिर : । विवध
इति वि = वध : । गिरो भ्रजो भ्रजो गिरो गिरो भ्रज : । भ्रज स्सꣳस्तुप्

सꣳस्तुब् भ्रजो भ्रज स्सꣳस्तुप् । सꣳस्तु बनुष्टु बनुस्तुप् सꣳस्तुप् सꣳस्तु बनुष्टुप् । सꣳस्तु बिति सं = स्तुप् । अनुष्टु बेव एवो ऽनुस्तुब नुष्टुबेव ः । अनुस्तुबित्यनु = स्तुप् । एवो वरिवो वरिव एव एवो वरिव ः । वरिवो वयो वयो वरिवो वरिवो वय ः । वयो वयस्कृ द्वय ः कृ द्वयो वयो वयस्कृत् । वयस्कृ द्विष्पर्धा विस्पर्धा वय ः कृ द्वयस्कृ द्विष्पर्धा ः । वय ः कृदिति वय ः = कृत् । विष्पर्धा विशालँ विशालँ विस्पर्धा विष्पर्धा विशालम् । विस्पर्धा इति वि = स्पर्धा ः । विशालञ् छदि श्छदि विशालँ विशालञ् छदि ः । विशालमिति वि =

शालम् । छदि दूरोहणन् दूरोहणञ् छदि श्छदि दूरोहणम् । दूरोहणन् तन्द्रन् तन्द्रन् दूरोहणन् दूरोहणन् तन्द्रम् । दूरोहण मिति दु : = रोहणम् । तन्द्र मङ्काङ्क मङ्काङ्कन् तन्द्रन् तन्द्र मङ्काङ्कम् । अङ्काङ्कञ् छन्द श्छन्दोऽ ङ्काङ्क मङ्काङ्कञ् छन्द : । अङ्काङ्क मित्यङ्क = अङ्कम् । छन्द इति च्छन्द : ।।१।।

रश्मिना सत्याय सत्याय रश्मिना रश्मिना सत्याय । सत्याय सत्यꣳ सत्यꣳ
सत्याय सत्याय सत्यम् । सत्य ञ्जिन्व जिन्व सत्यꣳ सत्य ञ्जिन्व । जिन्व
प्रेतिना प्रेतिना जिन्व जिन्व प्रेतिना । प्रेतिना धर्मणा धर्मणा प्रेतिना प्रेतिना
धर्मणा । प्रेतिनेति प्र = इतिना । धर्मणा धर्मन् धर्मन् धर्मणा धर्मणा धर्मम् ।
धर्म मन्वित्या ऽन्वित्या धर्मन् धर्म मन्वित्या । अन्वित्या दिवा दिवा ऽन्वित्या
ऽन्वित्या दिवा । अन्वित्येत्यनु = इत्या । दिवा दिवन् दिवन् दिवा दिवा दिवम्।
दिवाँ सन्धिना सन्धिना दिवन् दिवाँ सन्धिना । सन्धिना ऽन्तरिक्षे णान्तरिक्षेण

सन्धिना सन्धिना ऽन्तरिक्षेण । सन्धिनेति सं = धिना । अन्तरिक्षे णान्तरिक्ष मन्तरिक्ष मन्तरिक्षे णान्तरिक्षे णान्तरिक्षम् । अन्तरिक्षं प्रतिधिना प्रतिधिना ऽन्तरिक्ष मन्तरिक्षं प्रतिधिना । प्रतिधिना पृथिव्या पृथिव्या प्रतिधिना प्रतिधिना पृथिव्या । प्रतिधिनेति प्रति = धिना । पृथिव्या पृथिवीं पृथिवीं पृथिव्या पृथिव्या पृथिवीम् । पृथिवीँ विष्टंभेन विष्टंभेन पृथिवीं पृथिवीँ विष्टंभेन । विष्टंभेन वृष्ट्या वृष्ट्या विष्टंभेन विष्टंभेन वृष्ट्या । वृष्ट्या वृष्टिँ वृष्टिँ वृष्ट्या वृष्ट्या वृष्टिम् । वृष्टिम् प्रवया प्रवया वृष्टिँ वृष्टिम् प्रवया । प्रवयाऽन्हा ऽन्हा प्रवया प्रवयाऽन्हा ।

प्रवयेति प्र = वया । अन्हा ऽह रह रन्हा ऽन्हा ऽह : । अह रनुया ऽनुया ऽहर

हरनुया । अनुया रात्र्या रात्र्या ऽनुया ऽनुया रात्र्या । अनुये त्यनु = या । रात्र्या

रात्रीँ रात्रीँ रात्र्या रात्र्या रात्रीम् । रात्री मुशि जोशिजा रात्रीँ रात्री मुशिजा।

उशिजा वसुभ्यो वसुभ्य उशि जोशिजा वसुभ्य : । वसुभ्यो वसून् वसून् वसुभ्यो

वसुभ्यो वसून् । वसुभ्य इति वसु = भ्य : । वसून् प्रकेतेन प्रकेतेन वसून् वसून्

प्रकेतेन । प्रकेतेना दित्येभ्य आदि त्येभ्य : प्रकेतेन प्रकेतेना दित्येभ्य : ।

प्रकेतेनेति प्र = केतेन । आदित्येभ्य आदित्या नादित्या नादित्येभ्य आदित्येभ्य

आदित्यान् । आदित्याँ स्तन्तुना तन्तुना ऽऽदित्या नादित्याँ स्तन्तुना । तन्तुना रायो राय स्तन्तुना तन्तुना राय ः । राय स्पोषेण पोषेण रायो राय स्पोषेण । पोषेण रायो राय ः पोषेण पोषेण राय ः । राय स्पोषं पोषँ रायो राय स्पोषम् । पोषाँ साँसर्पेण सँसर्पेण पोषं पोषाँ साँसर्पेण । साँसर्पेण श्रुताय श्रुताय सँसर्पेण साँसर्पेण श्रुताय । साँसर्पेणेति सं = सर्पेण । श्रुताय श्रुतँ श्रुतँ श्रुताय श्रुताय श्रुतम् । श्रुत मैळे नैळेन श्रुतँ श्रुत मैळेन । ऐळे नौषधीभि रोषधीभि रैळे नैळे नौषधीभि ः । ओषधीभि रोषधी रोषधी रोषधीभि रोषधीभि

73

रोषधी : । ओषधी रुत्तमेनो त्तमे नौषधी रोषधी रुत्तमेन । उत्तमेन तनूभि स्तनूभि रुत्तमेनो त्तमेन तनूभि : । उत्तमेनेत्युत् = तमेन । तनूभि स्तनू स्तनू स्तनूभि स्तनूभि स्तनू : । तनू वयोधसा वयोधसा तनू स्तनू वयोधसा । वयोधसा ऽऽधीतेना धीतेन वयोधसा वयोधसा ऽऽधीतेन । वयो धसेति वय : = धसा । आधीतेना ऽऽधीत माधीत माधीतेना ऽऽधीतेना ऽऽधीतम् । आधीते नेत्या = धीतेन । आधीत मभिजिता ऽभिजिता ऽऽधीत माधीत मभिजिता । आधीत मित्या - धीतम् । अभिजिता तेजसा तेजसा ऽभिजिता ऽभिजिता

तेजसा । अभिजितेत्यभि = जिता । तेजसा तेज स्तेज स्तेजसा तेजसा तेज : ।
तेजो जिन्व जिन्व तेज स्तेजो जिन्व । जिन्व प्रतिपत् प्रतिप ज्जिन्व जिन्व
प्रतिपत् । प्रतिपदस्यसि प्रतिपत् प्रति पदसि । प्रतिपदिति प्रति = पत् । असि
प्रतिपदे प्रतिपदे ऽस्यसि प्रतिपदे । प्रतिपदे त्वा त्वा प्रतिपदे प्रतिपदे त्वा ।
प्रतिपद इति प्रति = पदे । त्वा ऽनुपदनु पत्त्वा त्वा ऽनुपत् । अनुपदे नुपदे
ऽनुपदे ऽनुपद नुपद नुपदे । अनुपदित्यनु = पत् । अनुपदे संपत्संप दनुपदे
ऽनुपदे संपत् । अनुपद इत्यनु = पदे । संपत्संपदे संपदे संप त्संप त्संपदे ।

संपदिति सं = पत् । संपदे तेज स्तेज स्संपदे संपदे तेज ः । संपद इति सं = पदे । तेज स्तेजसे तेजसे तेज स्तेज स्तेजसे । तेजसे त्रिवृत् त्रिवृ त्तेजसे तेजसे त्रिवृत् । त्रिवृत् त्रिवृते त्रिवृते त्रिवृत् त्रिवृत् त्रिवृते । त्रिवृदिति त्रि = वृत् । त्रिवृते प्रवृत् प्रवृत् त्रिवृते त्रिवृते प्रवृत् । त्रिवृत इति त्रि = वृते । प्रवृ त्प्रवृते प्रवृते प्रवृत्प्रवृ त्प्रवृते । प्रवृदिति प्र = वृत् । प्रवृते विवृ द्विवृ त्प्रवृते प्रवृते विवृत् । प्रवृत इति प्र = वृते । विवृ द्विवृते विवृते विवृ द्विवृ द्विवृते । विवृदिति वि = वृत् । विवृते सवृत्सवृ द्विवृते विवृते सवृत् । विवृत इति वि = वृते ।

सवृत्सवृते सवृते सवृत् सवृ त्सवृते । सवृदिति स = वृत् । सवृत आक्रम आक्रम
स्सवृते सवृत आक्रम ः । सवृत इति स = वृते । आक्रम आक्रमाया क्रमाया
क्रम आक्रम आक्रमाय । आक्रम इत्या = क्रम ः । आक्रमाय सङ्क्रम स्सङ्क्रम
आक्रमाया क्रमाय सङ्क्रम ः । आक्रमायेत्या = क्रमाय । सङ्क्रम स्सङ्क्रमाय
सङ्क्रमाय सङ्क्रम स्सङ्क्रम स्सङ्क्रमाय । सङ्क्रम इति सं = क्रम ः ।
सङ्क्रमायोत्क्रम उत्क्रम स्सङ्क्रमाय सङ्क्रमायो त्क्रम ः । सङ्क्रमायेति सं =
क्रमाय । उत्क्रम उत्क्रमायो त्क्रमायो त्क्रम उत्क्रम उत्क्रमाय । उत्क्रम इत्युत् -

क्रम : । उत्क्रमायो त्क्रान्ति रुत्क्रान्ति रुत्क्रमायो त्क्रमायो त्क्रान्ति : ।
उत्क्रमायेत्युत् = क्रमाय । उत्क्रान्ति रुत्क्रान्त्या उत्क्रान्त्या उत्क्रान्ति रुत्क्रान्ति
रुत्क्रान्त्यै । उत्क्रान्ति रित्युत् = क्रान्ति : । उत्क्रान्त्यै त्वा त्वोत्क्रान्त्या
उत्क्रान्त्यै त्वा । उत्क्रान्त्या इत्युत् = क्रान्त्यै । त्वा ऽधिपतिना ऽधिपतिना त्वा
त्वा ऽधिपतिना । अधिपति नोर्जोर्जा ऽधिपतिना ऽधिपति नोर्जा ।
अधिपतिनेत्यधि = पतिना । ऊर्जोर्ज मूर्ज मूर्जोर्जो र्जम् । ऊर्जं वेषश्री वैषश्री
रूर्ज मूर्जं वेषश्री : । वेषश्री : क्षत्राय क्षत्राय वेषश्री वैषश्री : क्षत्राय । वेषश्री

रिति वेष = श्री : । क्षत्राय क्षत्रङ् क्षत्रङ् क्षत्राय क्षत्राय क्षत्रम् । क्षत्रञ् जिन्व जिन्व क्षत्रङ् क्षत्रञ् जिन्व । जिन्वेति जिन्व ।।२।।

राज्ञ्यस्यसि राज्ञी राज्ञ्यसि । असि प्राची प्राच्यस्यसि प्राची । प्राची दिग्दिक् प्राची प्राची दिक् । दिग्वसवो वसवो दिग्दिग्वसव : । वसव स्ते ते वसवो वसवस्ते । ते देवा देवास्ते ते देवा : । देवा - अधिपतयो ऽधिपतयो देवा देवा - अधिपतय : । अधिपतयो ऽग्नि रग्नि रधिपतयो ऽधिपतयो ऽग्नि : । अधिपतय

इत्यधि = पतय : । अग्निर्हेतीनाꣳ हेतीना मग्नि रग्नि र्हेतीनाम् । हेतीनां
प्रतिधर्ता प्रतिधर्ता हेतीनाꣳ हेतीनां प्रतिधर्ता । प्रतिधर्ता त्रिवृत् त्रिवृत् प्रतिधर्ता
प्रतिधर्ता त्रिवृत् । प्रतिधर्तेति प्रति = धर्ता । त्रिवृत्त्वा त्वा त्रिवृत् त्रिवृत्त्वा ।
त्रिवृदिति त्रि = वृत् । त्वा स्तोम स्स्तोम स्त्वा त्वा स्तोम : । स्तोम : पृथिव्यां
पृथिव्याꣳ स्तोम स्तोम : पृथिव्याम् । पृथिव्याꣳ श्रयतु श्रयतु पृथिव्यां
पृथिव्याꣳ श्रयतु । श्रयत्वाज्य माज्यꣳ श्रयतु श्रयत्वाज्यम् । आज्य मुक्थ मुक्थ
माज्य माज्य मुक्थम् । उक्थ मव्यथाया - अव्यथाया - उक्थ मुक्थ मव्यथायै ।

अव्यथायै स्तभ्नातु स्तभ्नात्वव्यथाया - अव्यथायै स्तभ्नातु । स्तभ्नातु रथन्तर९ँ रथन्तर९ँ स्तभ्नातु स्तभ्नातु रथन्तरम् । रथन्तराँ साम साम रथन्तर९ँ रथन्तराँ साम । रथन्तरमिति रथं = तरम् । साम प्रतिष्ठित्यै प्रतिस्थित्यै साम साम प्रतिष्ठित्यै । प्रतिष्ठित्या - अन्तरिक्षे ऽन्तरिक्षे प्रतिस्थित्यै प्रतिष्ठित्या - अन्तरिक्षे । प्रतिस्थित्या इति प्रति = स्थित्यै । अन्तरिक्ष ऋषय ऋषयो ऽन्तरिक्षे ऽन्तरिक्ष ऋषय : । ऋषय स्त्वा त्व ऋषय ऋषय स्त्वा । त्वा प्रथमजा : प्रथमजा स्त्वा त्वा प्रथमजा : । प्रथमजा देवेषु देवेषु प्रथमजा : प्रथमजा देवेषु।

प्रथमजा इति प्रथम = जा : । देवेषु दिवो दिवो देवेषु देवेषु दिव : । दिवो मात्रया मात्रया दिवो दिवो मात्रया । मात्रया वरिम्णा वरिम्णा मात्रया मात्रया वरिम्णा । वरिम्णा प्रथन्तु प्रथन्तु वरिम्णा वरिम्णा प्रथन्तु । प्रथन्तु विधर्ता विधर्ता प्रथन्तु प्रथन्तु विधर्ता । विधर्ता च च विधर्ता विधर्ता च । विधर्तेति वि = धर्ता । चाय मयञ्च चायम् । अय मधिपति रधिपति रय मय मधिपति : । अधिपति श्च चाधिपति रधिपति श्च । अधिपति रित्यधि = पति : । च ते ते च च ते । ते त्वा त्वा ते ते त्वा । त्वा सर्वे सर्वे त्वा त्वा सर्वे । सर्वे सँविदाना

स्सँविदाना स्सर्वे सर्वे सँविदाना ः । सँविदाना नाकस्य नाकस्य सँविदाना
स्सँविदाना नाकस्य । सँविदाना इति सं = विदाना ः । नाकस्य पृष्ठे पृष्ठे
नाकस्य नाकस्य पृष्ठे । पृष्ठे स्वर्गे स्वर्गे पृष्ठे पृष्ठे स्वर्गे । स्वर्गे लोके लोके स्वर्गे
स्वर्गे लोके । स्वर्ग इति स्व ः = गे । लोके यजमानँ य्यजमानँ लोके लोके
यजमानम् । यजमानश्च च यजमानँ य्यजमान श्च । च सादयन्तु सादयन्तु च च
सादयन्तु । सादयन्तु विराड् विराट् सादयन्तु सादयन्तु विराट् । विरा ळस्यसि
विराड् विराळसि । विराळिति वि = राट् । असि दक्षिणा दक्षिणा ऽस्यसि

दक्षि॑णा । दक्षि॑णा दिग्दिग् दक्षि॑णा दक्षि॑णा दिक् । दिग्रुद्रा रुद्रा दिग्दिग्रुद्रा ः ।
रुद्रा स्ते॑ ते रुद्रा रुद्रास्ते॑ । ते देवा देवा स्ते॑ ते देवा ः । देवा - अधि॑पतयो
ऽधि॑पतयो देवा देवा - अधि॑पतय ः । अधि॑पतय इन्द्र इन्द्रो ऽधि॑पतयो ऽधि॑पतय
इन्द्र॑ ः । अधि॑पतय इत्यधि॑ = पतय ः । इन्द्रो॑ हेतीना॒ँ हे॑तीना मिन्द्र इन्द्रो॑
हेतीनाम् । हेतीनां॑ प्र॑तिधर्ता प्र॑तिधर्ता हे॑तीना॒ँ हे॑तीनां प्र॑तिधर्ता । प्रतिधर्ता
प॑ञ्चदश ः प॑ञ्चदश ः प्र॑तिधर्ता प्र॑तिधर्ता प॑ञ्चदश ः । प्रतिधर्तेति॑ प्रति = धर्ता ।
पञ्चदश स्त्वा॑ त्वा पञ्चदश ः प॑ञ्चदश स्त्वा॑ । पञ्चदश इति॑ पञ्च = दश ः । त्वा

स्तोम स्स्तोम स्त्वा त्वा स्तोम ः । स्तोम ः पृथिव्यां प्रथिव्या१ स्तोम स्तोम ः पृथिव्याम् । पृथिव्या१ श्रयतु श्रयतु पृथिव्यां पृथिव्या१ श्रयतु । श्रयतु प्र उगं प्र उग१ श्रयतु श्रयतु प्र उगम् । प्र उग मुक्थ मुक्थं प्र उगं प्र उग मुक्थम् । उक्थ मव्यथाया - अव्यथाया उक्थ मुक्थ मव्यथायै । अव्यथायै स्तभ्नातु स्तभ्ना त्वव्यथाया - अव्यथायै स्तभ्नातु । स्तभ्नातु बृहद् बृह त्स्तभ्नातु स्तभ्नातु बृहत् । बृहत्साम साम बृहद् बृहत्साम । साम प्रतिष्ठित्यै प्रतिस्थित्यै साम साम प्रतिष्ठित्यै । प्रतिष्ठित्या - अन्तरिक्षे ऽन्तरिक्षे प्रतिस्थित्यै प्रतिष्ठित्या -

अन्तरिक्षे । प्रतिस्थित्या इति प्रति = स्थित्यै । अन्तरिक्षे सम्राट् सम्रा ळन्तरिक्षे

ऽन्तरिक्षे सम्राट् । सम्रा ळस्यसि सम्राट् सम्राळसि । सम्राळिति सं = राट् ।

असि प्रतीची प्रतीच्यस्यसि प्रतीची । प्रतीची दिग्दिक् प्रतीची प्रतीची दिक् ।

दिगादित्या - आदित्या दिग्दिगा दित्या ः । आदित्या स्ते त आदित्या -

आदित्या स्ते । ते देवा देवा स्ते ते देवा ः । देवा अधिपतयो ऽधिपतयो देवा

देवा - अधिपतय ः । अधिपतयो वरुणो वरुणो ऽधिपतयो ऽधिपतयो वरुण ः ।

अधिपतय इत्यधि = पतय ः । वरुणो हेतीनाꣳ हेतीनाँ वरुणो वरुणो हेतीनाम् ।

हेतीनां प्रतिधर्ता प्रतिधर्ता हेतीनाꣳ हेतीनां प्रतिधर्ता । प्रतिधर्ता सप्तदश
स्सप्तदश : प्रतिधर्ता प्रतिधर्ता सप्तदश : । प्रतिधर्तेति प्रति = धर्ता । सप्तदश
स्त्वा त्वा सप्तदश स्सप्तदश स्त्वा । सप्तदश इति सप्त = दश : । त्वा स्तोम
स्स्तोम स्त्वा त्वा स्तोम : । स्तोम : पृथिव्यां पृथिव्याꣳ स्तोम स्तोम :
पृथिव्याम् । पृथिव्याꣳ श्रयतु श्रयतु पृथिव्यां पृथिव्याꣳ श्रयतु । श्रयतु
मरुत्वतीयम् मरुत्वतीयꣳ श्रयतु श्रयतु मरुत्वतीयम् । मरुत्वतीय मुक्थ मुक्थं
मरुत्वतीयम् मरुत्वतीय मुक्थम् । उक्थ मव्यथाया - अव्यथाया उक्थ मुक्थ मव्य

थायै । अव्यंथायै स्तभ्नातु स्तभ्ना त्वव्यंथाया - अव्यंथायै स्तभ्नातु । स्तभ्नातु

वैरूपँ वैरूपꣳ स्तंभ्नातु स्तभ्नातु वैरूपम् । वैरूपाँ साम सामं वैरूपँ वैरूपाँ सामं।

साम प्रतिंष्ठित्यै प्रतिंस्थित्यै साम साम प्रतिंष्ठित्यै । प्रतिंष्ठित्या - अन्तरिंक्षे

ऽन्तरिंक्षे प्रतिंस्थित्यै प्रतिंष्ठित्या - अन्तरिंक्षे । प्रतिंस्थित्या इति प्रतिं = स्थित्यै।

अन्तरिंक्षे स्वराट् स्वरा ळन्तरिंक्षे ऽन्तरिंक्षे स्वराट् । स्वरा ळंस्यसि स्वराट्

स्वराळंसि । स्वराळितिं स्व = राट् । अस्युदीच्युदींच्यस्य स्युदींची । उदींची

दिग्दिगु दीच्युदींची दिक् । दिङ् मरुतों मरुतो दिग्दिङ् मरुतं : । मरुतं स्ते ते

मरुतो मरुत स्ते । ते देवा देवा स्ते ते देवा : । देवा अधिपतयो ऽधिपतयो देवा देवा - अधिपतय : । अधिपतय स्सोम सोमो ऽधिपतयो ऽधिपतय स्सोम : । अधिपतय इत्यधि = पतय : । सोमो हेतीना२ँ हेतीना२ँ सोम स्सोमो हेतीनाम् । हेतीनां प्रतिधर्ता प्रतिधर्ता हेतीना२ँ हेतीनां प्रतिधर्ता । प्रतिधर्तैकवीँश एकवि२ँश : प्रतिधर्ता प्रतिधर्तैकवीँश : । प्रतिधर्तेति प्रति = धर्ता । एकवीँश स्त्वा त्वैकवि२ँश एकवीँश स्त्वा । एकवीँश इत्येक = वीँश : । त्वा स्तोम स्स्तोम स्त्वा त्वा स्तोम : । स्तोम : पृथिव्यां पृथिव्या२ँ स्तोम स्तोम :

पृथिव्याम् । पृथिव्याꣳ श्रयतु श्रयतु पृथिव्यां पृथिव्याꣳ श्रयतु । श्रयतु निष्केवल्यन् नि : केवल्यꣳ श्रयतु श्रयतु निष्केवल्यम् । निष्केवल्य मुक्थ मुक्थन् नि : केवल्यन् निष्केवल्य मुक्थम् । नि : केवल्य मिति नि : = केवल्यम् । उक्थ मव्यथाया - अव्यथाया उक्थ मुक्थ मव्यथायै । अव्यथायै स्तभ्नातु स्तभ्ना त्वव्यथाया - अव्यथायै स्तभ्नातु । स्तभ्नातु वैराजँ वैराजꣳ स्तभ्नातु स्तभ्नातु वैराजम् । वैराजाँ साम साम वैराजँ वैराजाँ साम । साम प्रतिष्ठित्यै प्रतिस्थित्यै साम साम प्रतिष्ठित्यै । प्रतिष्ठित्या - अन्तरिक्षे ऽन्तरिक्षे प्रतिस्थित्यै प्रतिष्ठित्या

- अन्तरिक्षे । प्रतिस्थित्या इति प्रति = स्थित्यै । अन्तरिक्षे ऽधिपत्न्यधि पत्न्यन्तरिक्षे ऽन्तरिक्षे धिपत्नी । अधिपत्न्यस्यस्य धिपत्न्यधि पत्न्यसि । अधिपत्नीत्यधि = पत्नी । असि बृहती बृहत्यंस्यसि बृहती । बृहती दिग्दिग्बृहती बृहती दिक् । दिग्विश्वे विश्वे दिग्दिग्विश्वे । विश्वे ते ते विश्वे विश्वे ते । ते देवा देवा स्ते ते देवा ः । देवा - अधिपतयो ऽधिपतयो देवा देवा - अधिपतय ः । अधिपतयो बृहस्पति र्बृहस्पति रधिपतयो ऽधिपतयो बृहस्पति ः । अधिपतय इत्यधि = पतय ः । बृहस्पति र्हेतीनाꣳ हेतीनां बृहस्पति र्बृहस्पति

हेतीनाम् । हेतीनां प्रतिधर्ता प्रतिधर्ता हेतीनाꣳ हेतीनां प्रतिधर्ता । प्रतिधर्ता त्रिणवत्रयस्त्रीँशौ त्रिनवत्रयस्त्रिꣳशौ प्रतिधर्ता प्रतिधर्ता त्रिणवत्रयस्त्रीँशौ । प्रतिधर्तेति प्रति = धर्ता । त्रिणवत्रयस्त्रीँशौ त्वा त्वा त्रिनवत्रयस्त्रिꣳशौ त्रिणवत्रय स्त्रीँशौ त्वा । त्रिनवत्रयस्त्रीँशा इति त्रिनवत्रयस्त्रीँशौ । त्वा स्तोमौ स्तोमौ त्वा त्वा स्तोमौ । स्तोमौ पृथिव्यां पृथिव्याꣳ स्तोमौ स्तोमौ पृथिव्याम् । पृथिव्याꣳ श्रयताꣳ श्रयतां पृथिव्यां पृथिव्याꣳ श्रयताम् । श्रयताँ वैश्वदेवाग्निमारुते वैश्वदेवाग्निमारुते श्रयताꣳ श्रयताँ वैश्वदेवाग्निमारुते । वैश्वदेवाग्निमारुते उक्थे

उक्थे वैश्वदेवाग्निमारुते वैश्वदेवाग्निमारुते उक्थे । वैश्वदेवाग्निमारुते इति
वैश्वदेवाग्निमारुते । उक्थे - अव्यंथाया - अव्यंथाया - उक्थे उक्थे अव्यंथायै ।
उक्थे इत्युक्थे । अव्यंथायै स्तभ्नीताꣳ स्तभ्नीता मव्यंथाया - अव्यंथायै
स्तभ्नीताम् । स्तभ्नीताꣳ शाक्करैवते शांक्करैवते स्तंभ्नीताꣳ स्तभ्नीताꣳ
शाक्करैवते । शाक्करैवते सामंनी सामंनी शाक्करैवते शांक्करैवते सामंनी ।
शाक्करैवते इतिं शाक्करैवते । सामंनी प्रतिंष्ठित्यै प्रतिंस्थित्यै सामंनी सामंनी
प्रतिंष्ठित्यै । सामंनी इति सामंनी । प्रतिंष्ठित्या - अन्तरिंक्षे ऽन्तरिंक्षे प्रतिंस्थित्यै

प्रतिष्ठित्या - अन्तरिक्षे । प्रतिस्थित्या इति प्रति = स्थित्यै । अन्तरिक्ष इत्यन्तरिक्षे ।।३।।

अयं पुर : पुरोऽय मयं पुर : । पुरो हरिकेशो हरिकेश : पुर : पुरो हरिकेश :। हरिकेश स्सूर्यरश्मि स्सूर्यरश्मि र्हरिकेशो हरिकेश स्सूर्यरश्मि : । हरिकेश इति हरि = केश : । सूर्यरश्मि स्तस्य तस्य सूर्यरश्मि स्सूर्यरश्मि स्तस्य । सूर्यरश्मि रिति सूर्य = रश्मि : । तस्य रथगृत्सो रथगृत्स स्तस्य तस्य रथगृत्स : । रथगृत्स श्च

च रथगृत्सो रथगृत्स श्च । रथगृत्स इति रथ = गृत्स : । च रथौजा रथौजा श्च
च रथौजा : । रथौजा श्च च रथौजा रथौजा श्च । रथौजा इति रथ = ओजा :।
च सेनानी ग्रामण्यौ सेनानीग्रामन्यौ च च सेनानी ग्रामण्यौ । सेनानीग्रामण्यौ
पुञ्जिकस्थला पुञ्जिकस्थला सेनानी ग्रामण्यौ सेनानी ग्रामण्यौ पुञ्जिकस्थला ।
सेनानीग्रामन्या इति सेनानीग्रामन्यौ । पुञ्जिकस्थला च च पुञ्जिकस्थला
पुञ्जिकस्थला च । पुञ्जिकस्थ लेति पुञ्जिक = स्थला । च क्रतुस्थला क्रतुस्थला
च च क्रतुस्थला । क्रतुस्थला च च क्रतुस्थला क्रतुस्थला च । क्रतुस्थलेति क्रतु

= स्थला । चाप्सरसा - अप्सरसौ च चाप्सरसौ । अप्सरसौ दङ्क्ष्णवौ दङ्क्ष्णवोऽ

प्सरसा - अप्सरसौ दङ्क्ष्णव : ।दङ्क्ष्णव : पशव : पशवौ दङ्क्ष्णवौ दङ्क्ष्णव :

पशव : । पशवौ हेति र्हेति : पशव : पशवौ हेति : । हेति : पौरुषेय :

पौरुषेयो हेति र्हेति : पौरुषेय : । पौरुषेयो वधो वध : पौरुषेय : पौरुषेयो

वध : । वध : प्रहेति : प्रहेति र्वधो वध : प्रहेति : । प्रहेति स्तेभ्य : तेभ्य :

प्रहेति : प्रहेति स्तेभ्य : । प्रहेति रिति प्र = हेति : । तेभ्यो नमो नम स्तेभ्य

स्तेभ्यो नम : । नमो - अस्त्वस्तु नमो नमो - अस्तु । अस्तु ते ते ऽस्त्वस्तु

ते । ते नो न स्ते ते नः । नो मृळयन्तु मृळयन्तु नो नो मृळयन्तु । मृळयन्तु ते ते मृळयन्तु मृळयन्तु ते । ते नो न स्ते ते नः । नो ऽवन्त्ववन्तु नो नो ऽवन्तु । अवन्तु ते ते ऽवन्त्ववन्तु ते । ते यँ य्य न्ते ते यम् । यन् द्विष्मो द्विष्मो यँ य्यन् द्विष्मः । द्विष्मो यो यो द्विष्मो द्विष्मो यः । यश्च च यो यश्च । च नो न श्च च नः । नो द्वेष्टि द्वेष्टि नो नो द्वेष्टि । द्वेष्टि तन्तन् द्वेष्टि द्वेष्टि तम् । तमेषा मेषान् तन्त मेषाम् । एषाञ् जम्भे जम्भ एषा मेषाञ् जंभे । जंभे दध्मो दध्मो जंभे जंभे दध्मः । दध्मो ऽय मयन् दध्मो दध्मो ऽयम् । अयन् दक्षिणा

दक्षिणा ऽय मयन् दक्षिणा । दक्षिणा विश्वकर्मा विश्वकर्मा दक्षिणा दक्षिणा विश्वकर्मा । विश्वकर्मा तस्य तस्य विश्वकर्मा विश्वकर्मा तस्य । विश्व कर्मेति विश्व = कर्मा । तस्य रथस्वनो रथस्वन स्तस्य तस्य रथस्वन : । रथस्वनो रथेचित्रो रथेचित्रो रथस्वनो रथस्वनो रथेचित्र : । रथस्वन इति रथ = स्वन : । रथेचित्रो मेनका मेनका रथेचित्रो रथेचित्रो मेनका । रथेचित्र इति रथे = चित्र : । मेनका सहजन्या सहजन्या मेनका मेनका सहजन्या । सहजन्या ऽप्सरसा - अप्सरसौ सहजन्या सहजन्या ऽप्सरसौ । सहजन्येति सह = जन्या । अप्सरसौ यातुधाना

यातुधाना - अप्सरसा - अप्सरसौ यातुधाना : । यातुधाना हेति हेति यातुधाना
यातुधाना हेति : । यातुधाना इति यातु = धाना : । हेती - रक्षाꣳसि
रक्षाꣳसि हेति हेती - रक्षाꣳसि । रक्षाꣳसि प्रहेति : प्रहेती - रक्षाꣳसि
रक्षाꣳसि प्रहेति : । प्रहेति रय मयं प्रहेति : प्रहेति रयम् । प्रहेति रिति प्र =
हेति : । अयं पश्चा त्पश्चा दय मयं पश्चात् । पश्चा द्विश्वव्यंचा विश्वव्यंचा : पश्चा
त्पश्चा द्विश्वव्यंचा : । विश्वव्यंचा स्तस्य तस्य विश्वव्यंचा विश्वव्यंचा स्तस्य ।
विश्वव्यंचा इति विश्व = व्यंचा : । तस्य रथप्रोतो रथप्रोत स्तस्य तस्य

रथप्रोत ः । रथप्रोतो ऽसमरथो ऽसमरथो रथप्रोतो रथप्रोतो ऽसमरथ ः ।
रथप्रोत इति रथ = प्रोत ः । असमरथ ः प्रम्लोचन्ती प्रम्लो चन्त्यसमरथो
ऽसमरथ ः प्रम्लोचन्ती । असमरथ इत्यसम = रथ ः । प्रम्लोच न्त्यनुम्लो
चन्त्यनुम्लो चन्ती प्रम्लोचन्ती प्रम्लोच न्त्यनुम्लोचन्ती । प्रम्लो चन्तीति प्र =
म्लोचन्ती । अनुम्लोचन्त्यप्सरसा - अप्सरसा - अनुम्लोच न्त्यनुम्लोच
न्त्यप्सरसौ । अनुम्लो चन्ती त्यनु = म्लोचन्ती । अप्सरसौ व्याघ्रा व्याघ्रा -
अप्सरसा - अप्सरसौ व्याघ्रा ः । व्याघ्रा हेति हेति व्याघ्रा व्याघ्रा हेति ः । हेति

स्सर्पा स्सर्पा हेति हेति स्सर्पा : । सर्पा : प्रहेति : प्रहेति स्सर्पा स्सर्पा :
प्रहेति : । प्रहेति रय मयं प्रहेति : प्रहेति रयम् । प्रहेति रिति प्र = हेति : ।
अय मुत्तरा दुत्तरा दय मय मुत्तरात् । उत्तरा त्सँय्यद्वसु स्सँय्यद्वसु रुत्तरा दुत्तरा
त्सँय्यद्वसु : । सँय्यद्वसु स्तस्य तस्य सँय्यद्वसु स्सँय्यद्वसु स्तस्य । सँय्यद्वसु रिति
सँय्यत् = वसु : । तस्य ताक्ष्र्य स्ताक्ष्र्य स्तस्य तस्य ताक्ष्र्य : । ताक्ष्र्यो ऽरिष्टनेमि
ररिष्टनेमि स्ताक्ष्र्य स्ताक्ष्र्यो ऽरिष्टनेमि : । अरिष्टनेमि र्विश्वाची विश्वाच्यरिष्टनेमि
ररिष्टनेमि र्विश्वाची । अरिष्टनेमि रित्यरिष्ट = नेमि : । विश्वाची घृताची घृताची

विश्वाची विश्वाची घृताची । घृताच्यप्सरसा - अप्सरसौ घृताची घृताच्यप्सरसौ ।
अप्सरसा - आप आपो ऽप्सरसा - अप्सरसा - आप ः । आपो हेति हेति राप
आपो हेति ः । हेति र्वातो वातो हेति हेति र्वात ः । वात ः प्रहेति ः प्रहेति
र्वातो वात ः प्रहेति ः । प्रहेति रय मयं प्रहेति ः प्रहेति रयम् । प्रहेति रिति प्र
= हेति ः । अय मुप युप यय मय मुपरि । उप र्यर्वाग्वसु रर्वाग्वसु रुप युप
र्यर्वाग्वसु ः । अर्वाग्वसु स्तस्य तस्यार्वाग्वसु रर्वाग्वसु स्तस्य । अर्वाग्वसु
रित्यर्वाक् = वसु ः । तस्य सेनजि त्सेनजि त्तस्य तस्य सेनजित् । सेनजि त्सुषेण

स्सुसेन स्सेनजि त्सेनजि त्सुषेण : । सेनजिदिति सेन = जित् । सुषेण
उर्वश्युर्वशी सुसेन स्सुषेण उर्वशी । सुसेन इति सु = सेन : । उर्वशी पूर्वचित्ति :
पूर्वचित्ति रुर्वश्युर्वशी पूर्वचित्ति : । पूर्वचित्ति रप्सरसा - अप्सरसौ पूर्वचित्ति :
पूर्वचित्ति रप्सरसौ । पूर्वचित्ति रिति पूर्व = चित्त : । अप्सरसा - अवस्फूर्ज
न्नवस्फूर्ज न्नप्सरसा - अप्सरसा - अवस्फूर्जन् । अवस्फूर्जन् हेति हेति रवस्फूर्ज
न्नवस्फूर्ज न्हेति : । अवस्फूर्ज न्नित्यव = स्फूर्जन् । हेति र्विद्यु द्विद्यु द्धेति हेति

विंद्युत् । विद्यु त्प्रहैति : प्रहैति विंद्यु द्विद्यु त्प्रहैति : । विद्युदिर्ति वि = द्युत् ।
प्रहैति रिति प्र = हैति : ।।४।।

अय मग्नि रग्नि रय मय मग्नि : । अग्नि स्संहस्रिणं स्सहस्रिणो ऽग्नि रग्नि
स्संहस्रिणं : । सहस्रिणो वाजंस्य वाजस्य सहस्रिणं स्सहस्रिणो वाजंस्य । वाजंस्य
शतिनं श्शतिनो वाजंस्य वाजस्य शतिनं : । शतिन स्पति : पतिं श्शतिनं
श्शतिन स्पतिं : । पति रिति पतिं : ।। मूर्धा कवि : कवि र्मूर्धा मूर्धा कवि :।

कवी - रयीणाꣳ रयीणाङ् कवि ः कवी - रयीणाम् । रयीणा मिति रयीणाम् ।।
अबोध्यग्नि रग्नि रबोध्यबो ध्यग्नि ः । अग्नि स्समिधा समिधा ऽग्नि रग्नि स्समिधा ।
समिधा जनानाञ् जनानाꣳ समिधा समिधा जनानाम् । समिधेति सं = इधा ।
जनानां प्रति प्रति जनानाञ् जनानां प्रति । प्रति धेनुमिव धेनुमिव प्रति प्रति
धेनुमिव । धेनुमिवा यती मायतीन् धेनुमिव धेनुमिवा यतीम् । धेनुमिवेति धेनुं =
इव । आयती मुषास मुषस मायती मायती मुषासम् । आयती मित्या = यतीम्।
उषस मित्युषसम् ।। यह्वा इव प्र प्र यह्वा इव यह्वा इव प्र । यह्वा इवेति यह्वा ः

= इव । प्र वयाँ वयां प्र प्र वयाम् । वया मुज्झिहाना - उज्झिहाना वयाँ वया मुज्झिहाना ः । उज्झिहाना ः प्र प्रोज्झिहाना - उज्झिहाना ः प्र । उज्झिहाना इत्युत्

= जिहाना ः । प्र भानवो भानव ः प्र प्र भानव ः । भानव स्सिस्रते सिस्रते भानवो भानव स्सिस्रते । सिस्रते नाकन् नाकꣳ सिस्रते सिस्रते नाकम् । नाक मच्छाच्छ नाकन् नाक मच्छ । अच्छेत्यच्छ ॥ अवोचाम कवये कवये ऽवोचामा वोचाम कवये । कवये मेध्याय मेध्याय कवये कवये मेध्याय । मेध्याय वचो वचो मेध्याय मेध्याय वच ः । वचो वन्दारु वन्दारु वचो वचो वन्दारु । वन्दारु

वृषभाय वृषभाय वन्दारु वन्दारु वृषभाय । वृषभाय वृष्णे वृष्णे वृषभाय वृषभाय वृष्णे । वृष्ण इति वृष्णे ।। गविष्ठिरो नमसा नमसा गविष्ठिरो गविष्ठिरो नमसा । नमसा स्तोमꣳ स्तोमन् नमसा नमसा स्तोमम् । स्तोम मग्ना - अग्नौ स्तोमꣳ स्तोम मग्नौ । अग्नौ दिवीव दिवी वाग्ना - अग्नौ दिवीव । दिवीव रुक्मꣳ रुक्मन् दिवीव दिवीव रुक्मम् । दिवीवेति दिवि = इव । रुक्म मुरुव्यञ्चं मुरुव्यञ्चꣳ रुक्मꣳ रुक्म मुरुव्यञ्चम् । उरुव्यञ्च मश्रे दश्रे दुरुव्यञ्च मुरुव्यञ्च मश्रेत् । उरुव्यञ्च मित्युरु = व्यञ्चम् । अश्रेदित्यश्रेत् ।। जनस्य गोपा गोपा जनस्य जनस्य गोपा ः।

गोपा - अजनिष्टा जनिष्ट गोपा गोपा - अजनिष्ट । अजनिष्ट जागृवि र्जागृवि
रजनिष्टा जनिष्ट जागृवि ः । जागृवि रग्नि रग्नि र्जागृवि र्जागृवि रग्नि ः । अग्नि
स्सुदक्ष स्सुदक्षो ऽग्नि रग्नि स्सुदक्ष ः । सुदक्ष स्सुविताय सुविताय सुदक्ष स्सुदक्ष
स्सुविताय । सुदक्ष इति सु = दक्ष ः । सुविताय नव्यसे नव्यसे सुविताय
सुविताय नव्यसे । नव्यस इति नव्यसे ।। घृतप्रतीको बृहता बृहता घृतप्रतीको
घृतप्रतीको बृहता । घृतप्रतीक इति घृत = प्रतीक ः । बृहता दिविस्पृशा
दिविस्पृशा बृहता बृहता दिविस्पृशा । दिविस्पृशा द्युमद् द्युम दिविस्पृशा

दिविस्पृशा द्युमत् । दिवि स्पृशेति दिवि = स्पृशा । द्युम द्वि वि द्युमद् द्युम द्वि ।
द्युमदिति द्यु = मत् । वि भाति भाति वि वि भाति । भाति भरतेभ्यो भरतेभ्यो
भाति भाति भरतेभ्य : । भरतेभ्य श्शुचि श्शुचि र्भरतेभ्यो भरतेभ्य श्शुचि : ।
शुचि रिति शुचि : ।। त्वामग्ने ऽग्ने त्वा न्त्वा मग्ने । अग्ने - अङ्गिरसो ऽङ्गिरसो
ऽग्ने ऽग्ने - अङ्गिरस : । अङ्गिरसो गुहा गुहा ऽङ्गिरसो ऽङ्गिरसो गुहा । गुहा
हितꣳ हितङ् गुहा गुहा हितम् । हित मन्वनु हितꣳ हितमनु । अन्वविन्द
न्नविन्द न्नन्वन्वविन्दन् । अविन्दञ्छिश्रियाणꣳ शिश्रियाण मविन्द न्नविन्द

ञ्छिश्रियाणम् । शिश्रियाणँ वनेवने वनेवने शिश्रियाण९ शिश्रियाणँ वनेवने । वनेवन इति वने = वने ।। स जायसे जायसे स स जायसे । जायसे मथ्यमानो मथ्यमानो जायसे जायसे मथ्यमान : ।मथ्यमान स्सह स्सहो मथ्यमानो मथ्यमान स्सह : । सहो महन्मह त्सह स्सहो महत् । महत्त्वा न्त्वां महन्महत्त्वाम् । त्वा माहु राहु स्त्वा न्त्वा माहु : । आहु स्सहस स्सहस आहुराहु स्सहस : । सहस स्पुत्रं पुत्र९ सहस स्सहस स्पुत्रम् । पुत्र मङ्गिरो ऽङ्गिर : पुत्रं पुत्र मङ्गिर : । अङ्गिर इत्यङ्गिर : ।। सखाय स्स९ स९ सखाय स्सखाय स्सम् । सँ वो वस्स९

सँ वं : । व स्सम्यञ्चं॰ सम्यञ्चँ वो व स्सम्यञ्चम् । सम्यञ्च मिष मिषं॰
सम्यञ्चं॰ सम्यञ्च मिषम् । इष॰ स्तोम॰ स्तोम मिष मिष॰ स्तोमम् । स्तोमञ्च
च स्तोम॰ स्तोम ञ्च । चाग्नये ऽग्नये च चाग्नये । अग्नय इत्यग्नये ।। वर्षिष्ठाय
क्षितीनाङ् क्षितीनाँ वर्षिष्ठाय वर्षिष्ठाय क्षितीनाम् । क्षितीना मूर्ज ऊर्ज :
क्षितीनाङ् क्षितीना मूर्ज : । ऊर्जो नप्त्रे नप्त्रे ऊर्ज ऊर्जो नप्त्रे । नप्त्रे सहस्वते
सहस्वते नप्त्रे नप्त्रे सहस्वते । सहस्वत इति सहस्वते ।। साँसमिदि त्स॰ स॰
साँसमित् । साँस मिति सं = सम् । इद्युवसे युवस इदिद्युवसे । युवसे

वृषन्वृषन्युवसे युवसे वृषन् । वृषन्नग्ने ऽग्ने वृषन्वृष न्नग्ने । अग्ने विश्वानि विश्वान्यग्ने ऽग्ने विश्वानि । विश्वान्यर्यो ऽर्यो विश्वानि विश्वान्यर्य ः । अर्य आऽर्यो ऽर्य आ । एत्या ।। इळ स्पदे पद इळ इळ स्पदे । पदे सꣳ सं पदे पदे सम् । समिध्यस इध्यसे सꣳ समिध्यसे । इध्यसे स स इध्यस इध्यसे स ः । स नो नस्स स न ः। नो वसूनि वसूनि नो नो वसूनि । वसून्या भर भरा वसूनि वसून्या भर । आभर। भरेति भर ।। त्वा मग्ने ऽग्ने त्वा न्त्वा मग्ने । अग्ने हविष्मन्तो हविष्मन्तो ऽग्ने ऽग्ने हविष्मन्त ः । हविष्मन्तो देवन् देवꣳ हविष्मन्तो हविष्मन्तो देवम् । देवं मर्तासो

मर्तासो देवन् देवं मर्तास : । मर्तास ईळत ईळते मर्तासो मर्तास ईळते । ईळत इतीळते ।। मन्ये त्वा त्वा मन्ये मन्ये त्वा । त्वा जातवेदसञ् जातवेदस न्त्वा त्वा जातवेदसम् । जातवेदसाँ स स जातवेदसञ् जातवेदसाँ स : । जातवेदस मिति जात = वेदसम् । स हव्या हव्या स स हव्या । हव्या वक्षि वक्षि हव्या हव्या वक्षि । वक्ष्यानुष गानुषग्वक्षि वक्ष्यानुषक् । अनुषगित्या नुषक् ।। त्वा श्चित्रश्रवस्तम चित्रश्रवस्तम त्वा न्त्वाञ् चित्रश्रवस्तम । चित्रश्रवस्तम हवन्ते हवन्ते चित्रश्रवस्तम चित्रश्रवस्तम हवन्ते । चित्रश्रवस्तमेति चित्रश्रव : = तम । हवन्ते

विक्षु विक्षु हवन्ते हवन्ते विक्षु । विक्षु जन्तवो जन्तवो विक्षु विक्षु जन्तव : ।
जन्तव इति जन्तव : ।। शोचिष्केशं पुरुप्रिय पुरुप्रिय शोचि : केशः शोचिष्केशं
पुरुप्रिय । शोचि : केश मिति शोचि : = केशम् । पुरुप्रियाग्ने ऽग्ने पुरुप्रिय पुरु
प्रियाग्ने । पुरुप्रियेति पुरु = प्रिय । अग्ने हव्याय हव्यायाग्ने ऽग्ने हव्याय । हव्याय
वोळ्हवे वोळ्हवे हव्याय हव्याय वोळ्हवे । वोळ्हव इति वोळ्हवे ।। एना वो व
एनैना व : । वो - अग्नि मग्निँ वो वो - अग्निम् । अग्निन् नमसा नमसा ऽग्नि
मग्निन् नमसा । नमसोर्ज ऊर्जो नमसा नमसोर्ज : । ऊर्जो नपातन् नपात मूर्ज

ऊर्जो नपातम् । नपात माहुवे हुव आ नपातन् नपात माहुवे । आहुवे । हुव इति हुवे ।। प्रियञ् चेतिष्ठञ् चेतिष्ठं प्रियं प्रियञ् चेतिष्ठम् । चेतिष्ठ मरति मरतिञ् चेतिष्ठञ् चेतिष्ठ मरतिम् । अरतिँ स्वध्वरँ स्वध्वर मरति मरतिँ स्वध्वरम् । स्वध्वरँ विश्वस्य विश्वस्य स्वध्वरँ स्वध्वरँ विश्वस्य । स्वध्वरमिति सु = अध्वरम् । विश्वस्य दूतन् दूतँ विश्वस्य विश्वस्य दूतम् । दूत ममृत ममृतन् दूतन् दूत ममृतम् । अमृत मित्यमृतम् ।। विश्वस्य दूतन् दूतँ विश्वस्य विश्वस्य दूतम् । दूत ममृत ममृतन् दूतन् दूत ममृतम् । अमृत मित्यमृतम् ।। स योजते

योजते स स योजते । योजते - अरुषा ऽरुषा योजते योजते - अरुषा । अरुषा विश्वभोजसा विश्वभोजसा ऽरुषा ऽरुषा विश्वभोजसा । विश्वभोजसा स स विश्वभोजसा विश्वभोजसा स ः । विश्वभोजसेति विश्व = भोजसा । स दुद्रव द्दुद्रव त्स स दुद्रवत् । दुद्रवत्स्वाहुत स्स्वाहुतो दुद्रवद् दुद्रव त्स्वाहुत ः । स्वाहुत इति सु = आहुत ः ।। स दुद्रव द्दुद्रव त्स स दुद्रवत् । दुद्रवत्स्वाहुत स्स्वाहुतो दुद्रवद् दुद्रव त्स्वाहुत ः । स्वाहुत इति सु = आहुत ः ।। सुब्रह्मा यज्ञो यज्ञ स्सुब्रह्मा सुब्रह्मा यज्ञ ः । सुब्रह्मेति सु = ब्रह्मा । यज्ञ स्सुशमी सुशमी यज्ञो यज्ञ

स्सुशर्मी । सुशमी वसूनाँ वसूना॑ सुशर्मी सुशमी वसूनाम् । सुशमीति सु = शर्मी । वसूनान् देवन् देवँ वसूनाँ वसूनान् देवम् । देवाँ राधो राधो देवन् देवाँ राधः । राधो जनानाञ् जनाना॑ राधो राधो जनानाम् । जनाना मिति जनानाम् ।। अग्ने वाजस्य वाजस्याग्ने ऽग्ने वाजस्य । वाजस्य गोमतो गोमतो वाजस्य वाजस्य गोमतः । गोमत ईशान ईशानो गोमतो गोमत ईशानः । गोमत इति गो = मतः । ईशान स्सहस स्सहस ईशान ईशान स्सहसः । सहसो यहो यहो सहस स्सहसो यहो । यहो इति यहो ।। अस्मे धेहि धेह्यस्मे -

अस्मे धेहि । अस्मे इत्यस्मे । धेहि जातवेदो जातवेदो धेहि धेहि जातवेद : ।
जातवेदो महि महि जातवेदो जातवेदो महि । जातवेद इति जात = वेद : ।
महि श्रव श्श्रवो महि महि श्रव : । श्रव इति श्रव : ।। स इधान इधान स्स स
इधान : । इधानो वसु र्वसु रिधान इधानो वसु : । वसु ष्कवि : कवि र्वसु
र्वसुष्कवि : । कवि रग्नि रग्नि : कवि : कवि रग्नि : । अग्नि रीळेन्य ईळेन्यो
ऽग्नि रग्नि रीळेन्य : । ईळेन्यो गिरा गिरेळेन्य ईळेन्यो गिरा । गिरेति गिरा ।।
रेव दस्मभ्य मस्मभ्यं॒ रेवद्रेव दस्मभ्यम् । अस्मभ्यम् पुर्वणीक पुर्वनी कास्मभ्य

मस्मभ्यंम् पुर्वणीक । पुर्वणीक दीदिहि दीदिहि पुर्वनीक पुर्वणीक दीदिहि । पुर्वनीकेति पुरु = अनीक । दीदिहीति दीदिहि ।। क्षपो राजन् राजन्क्षप ः क्षपो राजन् । राजन्नुतोत राजन् राजन्नुत । उतत्मना त्मनोतोत त्मना । त्मना ऽग्ने ऽग्ने त्मना त्मना ऽग्ने । अग्ने वस्तो र्वस्तो रग्ने ऽग्ने वस्तो ः । वस्तो रुतोत वस्तो र्वस्तो रुत । उतोषस उषस उतो तोषस ः । उषस इत्युषस ः ।। स तिग्मजंभ तिग्मजंभ स स तिग्मजंभ । तिग्मजंभ रक्षसो रक्षस स्तिग्मजंभ तिग्मजंभ रक्षस ः । तिग्मजंभेति तिग्म = जंभ । रक्षसो दह दह रक्षसो रक्षसो दह । दह

प्रति प्रति दह दह प्रति । प्रतीति प्रति ।। भद्रो नो नो भद्रो भद्रो न : । नो -
अग्नि रग्नि र्नो नो - अग्नि : । अग्नि राहुत आहुतो ऽग्नि रग्नि राहुत : । आहुतो
भद्रा भद्रा ऽऽहुत आहुतो भद्रा । आहुत इत्या = हुत : । भद्रा राती - राति
र्भद्रा भद्रा राति : । राति स्सुभग सुभग राती - राति स्सुभग । सुभग भद्रो भद्र
स्सुभग सुभग भद्र : । सुभगेति सु = भग । भद्रो - अध्वरो ऽध्वरो भद्रो भद्रो
- अध्वर : । अध्वर इत्यध्वर : ।। भद्रा - उतोत भद्रा भद्रा - उत । उत
प्रशस्तय : प्रशस्तय उतोत प्रशस्तय : । प्रशस्तय इति प्र = शस्तय : ।। भद्रा

- उतोत भद्रा भद्रा - उत । उत प्रशस्तय ः प्रशस्तय उतोत प्रशस्तय ः ।
प्रशस्तयो भद्रं भद्रं प्रशस्तय ः प्रशस्तयो भद्रम् । प्रशस्तय इति प्र = शस्तय ः ।
भद्रं मनो मनो भद्रं भद्रं मन ः । मन ः कृणुष्व कृणुष्व मनो मन ः कृणुष्व ।
कृणुष्व वृत्रतूर्ये वृत्रतूर्ये कृणुष्व कृणुष्व वृत्रतूर्ये । वृत्रतूर्य इति वृत्र = तूर्ये ।।
येना समत्सु समत्सु येन येना समत्सु । समत्सु सासह स्ससह स्समत्सु समत्सु
सासह ः । समत्स्विति समत् = सु । ससह इति ससह ः ।। येना समत्सु
समत्सु येन येना समत्सु । समत्सु सासह स्ससह स्समत्सु समत्सु सासह ः ।

समत्स्विति समत् = सु । सासहो ऽवाव ससह स्सासहो ऽव । ससह इति
ससह ः । अवस्थिरा स्थिरा ऽवाव स्थिरा । स्थिरा तनुहि तनुहि स्थिरा स्थिरा
तनुहि । तनुहि भूरि भूरि तनुहि तनुहि भूरि । भूरि शर्धता९ शर्धतां भूरि भूरि
शर्धताम् । शर्धता मिति शर्धताम् ।। वनेमा ते ते वनेम वनेमा ते । ते -
अभिष्टिभि रभिष्टिभि स्ते ते - अभिष्टिभि ः । अभिष्टिभि रित्यभिष्टि = भि ः ।।
अग्नि न्तन्त मग्नि मग्नि न्तम् । तं मन्ये मन्ये तन्तं मन्ये । मन्ये यो यो मन्ये मन्ये
य ः । यो वसु र्वसु र्यो यो वसु ः । वसु रस्त मस्तँ वसु र्वसु रस्तम् । अस्तँ य्यँ

य्य मस्त मस्तँ य्यम् । यँ य्यन्ति यन्ति यँ य्यँ य्यन्ति । यन्ति धेनवो धेनवो यन्ति यन्ति धेनव ः । धेनव इति धेनव ः ।। अस्त मर्वन्तो ऽर्वन्तो ऽस्त मस्त मर्वन्त ः । अर्वन्त आशव आशवो ऽर्वन्तो ऽर्वन्त आशव ः । अशवो ऽस्त मस्त माशव आशवो ऽस्तम् । अस्तन् नित्यासो नित्यासो ऽस्त मस्तन् नित्यास ः । नित्यासो वाजिनो वाजिनो नित्यासो नित्यासो वाजिन ः । वाजिन इष मिषँ वाजिनो वाजिन इषम् । इषँ॰ स्तोतृभ्य स्तोतृभ्य इष मिषँ॰ स्तोतृभ्य ः । स्तोतृभ्य आ भर भरा स्तोतृभ्य स्तोतृभ्य आभर । स्तोतृभ्य इति स्तोतृ =

भ्यं ः । आभंर । भरेतिंभर ।। सो - अग्नि रग्नि स्स सो - अग्नि ः । अग्नि र्यो

यो ऽग्नि रग्नि र्य ः । यो वसु र्वसु र्यो यो वसु ः । वसु र्गृणे गृणे वसु र्वसु र्गृणे ।

गृणे स९ सङ् गृणे गृणे सम् । सँ य्यँ य९ स९ सँ य्यम् । य मायन्त्या यन्ति यँ

य्य मायन्तिं । आयन्तिं धेनवों धेनवं आयन्त्या यन्तिं धेनवं ः । आयन्तीत्या =

यन्तिं । धेनव इतिं धेनवं ः ।। स मर्वन्तो ऽर्वन्त स्स९ स मर्वन्त ः । अर्वन्तो

रघुद्रुवों रघुद्रुवो ऽर्वन्तो ऽर्वन्तो रघुद्रुवं ः । रघुद्रुव स्स९ स९ रघुद्रुवों रघुद्रुव

स्सम् । रघुद्रुव इतिं रघु = द्रुवं ः । साँ सुंजातासं स्सुजातास स्स९ साँ

सुजातास : । सुजातास स्सूरय स्सूरय स्सुजातास स्सुजातास स्सूरय : ।
सुजातास इति सु = जातास : । सूरय इष मिषꣳ सूरय स्सूरय इषम् । इषꣳ
स्तोतृभ्य स्तोतृभ्य इष मिषꣳ स्तोतृभ्य : । स्तोतृभ्य आ भर भरा स्तोतृभ्य
स्तोतृभ्य आभर । स्तोतृभ्य इति स्तोतृ = भ्य : । आभर । भरेतिभर ।। उभे
सुश्चन्द्र सुचन्द्रोभे - उभे सुश्चन्द्र । उभे इत्युभे । सुश्चन्द्र सर्पिष स्सर्पिष स्सुचन्द्र
सुश्चन्द्र सर्पिष : । सुचन्द्रेति सु = चन्द्र । सर्पिषो दर्वी दर्वी सर्पिष स्सर्पिषो
दर्वी । दर्वी श्रीणीषे श्रीणीषे दर्वी दर्वी श्रीणीषे । दर्वी इति दर्वी । श्रीणीष आस

न्यासनि श्रीणीषे श्रीणीष आसनि । आसनी त्यासनि ।। उतो नो न उतो उतो

न : । उतो इत्युतो । न उदुन्नो न उत् । उत्पुपूर्या : पुपूर्या उदुत्पुपूर्या : ।

पुपूर्या - उक्थे षूक्थेषु पुपूर्या : पुपूर्या - उक्थेषु । उक्थेषु शवस श्शवस उक्थे

षूक्थेषु शवस : । शवस स्पते पते शवस श्शवस स्पते । पत इष मिषम् पते पत

इषम् । इषं स्तोतृभ्यं स्तोतृभ्य इष मिषं स्तोतृभ्यं : । स्तोतृभ्य आ भर भरा

स्तोतृभ्यं स्तोतृभ्य आभर । स्तोतृभ्य इति स्तोतृ = भ्यं : । आभर ।

भरेतिभर ।। अग्ने तन्त मग्ने ऽग्ने तम् । त मद्याद्य तन्त मद्य । अद्याश्व मश्व

मद्याद्याश्वम् । अश्वन् न नाश्व मश्वन् न । न स्तोमै स्तोमै र्न न स्तोमै ः । स्तोमै ः क्रतुङ् क्रतुं स्तोमै स्तोमै ः क्रतुम् । क्रतुन् न न क्रतुङ् क्रतुन् न । न भद्रं भद्रन् न न भद्रम् । भद्राँ हृदिस्पृशं हृदिस्पृशम् भद्रं भद्राँ हृदिस्पृशम् । हृदिस्पृश मिति हृदि = स्पृशम् ।। ऋध्यामा ते त ऋध्याम ऋध्यामा ते । त ओहै रोहै स्ते त ओहै ः । ओहै रित्योहै ः ।। अधा हिह्यधा धाहि । ह्यग्ने ऽग्ने हि ह्यग्ने । अग्ने क्रतो ः क्रतो रग्ने ऽग्ने क्रतो ः । क्रतो र्भद्रस्य भद्रस्य क्रतो ः क्रतो र्भद्रस्य । भद्रस्य दक्षस्य दक्षस्य भद्रस्य भद्रस्य दक्षस्य । दक्षस्य साधो

स्साधो र्दक्षस्य दक्षस्य साधो : । साधो रिति साधो : ।। रथी र्ऋतस्य ऋतस्य रथी रथी र्ऋतस्य । ऋतस्य बृहतो बृहत ऋतस्य ऋतस्य बृहत : । बृहतो बभूथ बभूथ बृहतो बृहतो बभूथ । बभूथेति बभूथ ।। एभि र्नो न एभि रेभिर्न : । नो - अर्कै रर्कै र्नो नो - अर्कै : । अर्कै र्भव भवार्कै रर्कै र्भव । भवा नो नो भव भवा न : । नो - अर्वा ङर्वाङ् र्नो नो - अर्वाङ् । अर्वाङ् स्व स्व रर्वा ङर्वाङ् स्व : । स्वर्ण नस्व स्वर्ण । न ज्योति र्ज्योति र्न न ज्योति : । ज्योति रिति ज्योति : ।। अग्ने विश्वेभि र्विश्वेभि रग्ने ऽग्ने विश्वेभि : । विश्वेभि स्सुमना स्सुमना

विश्वेभि विंश्वेभि स्सुमना : । सुमना - अनीकै रनीकै स्सुमना स्सुमना - अनीकै : । सुमना इति सु = मना : । अनीकै रित्यनीकै : ।। अग्नीँ होतारॅं होतार मग्नि मग्नीँ होतारम् । होतारं मन्ये मन्ये होतारॅं होतारं मन्ये । मन्ये दास्वन्तन् दास्वन्तं मन्ये मन्ये दास्वन्तम् । दास्वन्तँ वसुँ वसुन् दास्वन्तन् दास्वन्तँ वसुम् । वसूँ सूनुॅं सूनुँ वसुँ वसूँ सूनुम् । सूनूँ सहस स्सहस स्सूनुॅं सूनूँ सहस : । सहसो जातवेदस ञ्जातवेदसॅं सहस स्सहसो जातवेदसम् । जातवेदसँ विप्रँ विप्रं ञ्जातवेदस ञ्जातवेदसँ विप्रम् । जातवेदस मिति जात = वेदसम् ।

विप्रन् न न विप्रँ विप्रन् न । न जातवेदसञ् जात वेदसन् न न जातवेदसम् । जातवेदस मिति जात = वेदसम् ।। य ऊर्ध्व योर्ध्वया यो य ऊर्ध्वया । ऊर्ध्वया स्वध्वर स्स्वध्वर ऊर्ध्व योर्ध्वया स्वध्वर : । स्वध्वरो देवो देव स्वध्वर स्स्वध्वरो देव : । स्वध्वर इति सु = अध्वर : । देवो देवाच्या देवाच्या देवो देवो देवाच्या । देवाच्या कृपा कृपा देवाच्या देवाच्या कृपा । कृपेति कृपा ।। घृतस्य विभ्राष्टिँ विभ्राष्टिङ् घृतस्य घृतस्य विभ्राष्टिम् । विभ्राष्टि मन्वनु विभ्राष्टिँ विभ्राष्टि मनु । विभ्राष्टि मिति वि = भ्राष्टिम् । अनु वष्टि वष्ट्यन्वनु वष्टि । वष्टि

शोचिषा शोचिषा वष्टि वष्टि शोचिषा । शोचिषा ऽऽजुह्वान स्या जुह्वानस्य शोचिषा शोचिषा ऽऽजुह्वानस्य । आजुह्वानस्य सर्पिष स्सर्पिष आजुह्वान स्याजु ह्वानस्य सर्पिष : । आजुह्वानस्येत्या = जुह्वानस्य । सर्पिष इति सर्पिष : ।।५।।

येन ऋषय ऋषयो येन येन ऋषय : । ऋषय स्तपसा तपस ऋषय ऋषय स्तपसा । तपसा सत्र९ सत्रन् तपसा तपसा सत्रम् । सत्र माय न्नायन्त्सत्र९ सत्र मायन् । आय न्निन्धाना - इन्धाना - आय न्नाय न्निन्धाना : । इन्धाना - अग्नि

मग्नि मिन्धाना - इन्धाना - अग्निम् । अग्निं स्व स्वं रग्नि मग्निं स्वं : । स्वं राभरन्त आभरन्त स्स्व स्स्वं राभरन्त : । आभरन्त इत्या = भरन्त : ।। तस्मिंन्नह महन् तस्मिं स्तस्मिं न्नहम् । अहन्निन्यह महन्नि । नि दधे दधे नि नि दधे । दधे नाके नाके दधे दधे नाके । नाके - अग्नि मग्निन् नाके नाके - अग्निम् । अग्निँ य्यँ य्य मग्नि मग्निँ य्यम् । य माहु राहुर्यँ य्य माहु : । आहु र्मनवो मनव आहु राहु र्मनव : । मनव स्तीर्णब र्हिषं स्तीर्णबर्हिषं मनवो मनव स्तीर्णबर्हिषम् । स्तीर्णबर्हिष मिति स्तीर्ण = बर्हिषम् ।। तं पत्नीभि : पत्नीभि

स्तन्तं पत्नीभि : । पत्नीभि रन्वनु पत्नीभि : पत्नीभि रनु । अनु गच्छेम गच्छेमान्वनु गच्छेम । गच्छेम देवा देवा गच्छेम गच्छेम देवा : । देवा : पुत्रै : पुत्रैर्देवा देवा : पुत्रै : । पुत्रै र्भ्रातृभि र्भ्रातृभि : पुत्रै : पुत्रै र्भ्रातृभि : । भ्रातृभि रुतोत भ्रातृभि र्भ्रातृभि रुत । भ्रातृभि रिति भ्रातृ = भि : । उत वा वोतोत वा। वा हिरण्यै हिरण्यै र्वा वा हिरण्यै : । हिरण्यै रिति हिरण्यै : ।। नाकङ् गृभ्णाना गृभ्णाना नाकङ् नाकङ् गृभ्णाना : । गृभ्णाना स्सुकृतस्य सुकृतस्य गृभ्णाना गृभ्णाना स्सुकृतस्य । सुकृतस्य लोके लोके सुकृतस्य सुकृतस्य लोके ।

सुकृतस्येति सु = कृतस्य । लोके तृतीये तृतीये लोके लोके तृतीये । तृतीये पृष्ठे
पृष्ठे तृतीये तृतीये पृष्ठे । पृष्ठे - अध्यधि पृष्ठे पृष्ठे - अधि । अधि रोचने रोचने
ऽध्यधि रोचने । रोचने दिवो दिवो रोचने रोचने दिव : । दिव इति दिव : ।।
आ वाचो वाच आ वाच : । वाचो मध्यं मध्यं वाचो वाचो मध्यम् । मध्य मरुह
दरुह न्मध्यं मध्य मरुहत् । अरुहद् भुरण्यु र्भुरण्यु रंरुह दरुहद् भुरण्यु : । भुरण्यु
रय मयं भुरण्यु र्भुरण्यु रयम् । अय मग्नि रग्नि रय मय मग्नि : । अग्नि स्सत्पति
स्सत्पति रग्नि रग्नि स्सत्पति : । सत्पति श्चेकितान श्चेकितान स्सत्पति स्सत्पति

श्चेकितान : । सत्पति रिति सत् = पति : । चेकितान इति चेकितान : ।। पृष्ठे
पृथिव्या : पृथिव्या : पृष्ठे पृष्ठे पृथिव्या : । पृथिव्या निहितो निहित :
पृथिव्या : पृथिव्या निहित : । निहितो दविद्युतद् दविद्युत न्निहितो निहितो
दविद्युतत् । निहित इति नि = हित : । दविद्युत दधस्पद मध : पदन् दविद्युतद्
दविद्युत दधस्पदम् । अधस्पदङ् कृणुताङ् कृणुता मध : पद मधस्पदङ् कृणुताम्।
अध : पद मित्यध : = पदम् । कृणुताँ य्ये ये कृणुताङ् कृणुताँ य्ये । ये
पृतन्यव : पृतन्यवो ये ये पृतन्यव : । पृतन्यव इति पृतन्यव : ।। अय मग्नि रग्नि

रय मय मग्नि ः । अग्नि र्वीरतमो वीरतमो ऽग्नि रग्नि र्वीरतम ः । वीरतमो वयोधा

वयोधा वीरतमो वीरतमो वयोधा ः । वीरतम इति वीर = तम ः । वयाधा

स्सहस्रिय स्सहस्रियो वयोधा वयोधा स्सहस्रिय ः । वयोधा इति वय ः = धा ः ।

सहस्रियो द्योततान् द्योतता९ सहस्रिय स्सहस्रियो द्योतताम् । द्योतता मप्रयुच्छ

न्नप्रयुच्छन् द्योततान् द्योतता मप्रयुच्छन् । अप्रयुच्छ न्नित्यप्र = युच्छन् ।।

विभ्राजमान स्सरिरस्य सरिरस्य विभ्राजमानो विभ्राजमान स्सरिरस्य । विभ्राजमान

इति वि = भ्राजमान ः । सरिरस्य मध्ये मध्ये सरिरस्य सरिरस्य मध्ये । मध्य

उपोप मध्ये मध्य उप । उप प्र प्रोपोप प्र । प्र याहि याहि प्र प्र याहि । याहि दिव्यानि दिव्यानि याहि याहि दिव्यानि । दिव्यानि धाम धाम दिव्यानि दिव्यानि धाम । धामेति धाम ।। संप्रच्यवध्व मुपोप संप्रच्यवध्वꣳ संप्रच्यवध्व मुप । संप्रच्यवध्व मिति सं = प्रच्यवध्वम् । उप संप्रयात संप्रयातो पोप संप्रयात । संप्रयाताग्ने ऽग्ने संप्रयात संप्रयाताग्ने । संप्रयातेति सं = प्रयात । अग्ने पथ : पथो ऽग्ने ऽग्ने पथ : । पथो देवयाना न्देवयाना न्पथ : पथो देवयानान् । देवयानान् कृणुध्वङ् कृणुध्वन् देवयाना न्देवयानान् कृणुध्वम् । देवयाना निति देव =

यानान् । कृणुध्वमिति कृणुध्वम् ।। पुन ः कृण्वाना कृण्वाना पुन ः पुन ः
कृण्वाना । पुन रिति पुन ः । कृण्वाना पितरा पितरा कृण्वाना कृण्वाना पितरा।
पितरा युवाना युवाना पितरा पितरा युवाना । युवाना ऽन्वाताꣳसी दन्वा
ताꣳसी द्युवाना युवाना ऽन्वाताꣳसीत् । अन्वाताꣳसीत् त्वयि त्वय्यन्वाताꣳसी
दन्वाताꣳसीत् त्वयि । अन्वाताꣳसी दित्यनु = आताꣳसीत् । त्वयि तन्तुन् तन्तु
न्त्वयि त्वयि तन्तुम् । तन्तु मेत मेतन् तन्तुन् तन्तु मेतम् । एतमित्येतम् ।। उद्
बुध्यस्व बुध्यस्वोदुद् बुध्यस्व । बुध्यस्वाग्ने ऽग्ने बुध्यस्व बुध्यस्वाग्ने । अग्ने प्रति

प्रत्यग्ने ऽग्ने प्रति । प्रति जागृहि जागृहि प्रति प्रति जागृहि । जागृहि त्व न्त्वञ्
जागृहि जागृहि त्वम् । त्व मिष्टापूर्ते - इष्टापूर्ते त्व न्त्व मिष्टापूर्ते । इष्टापूर्ते सꣳ
स मिष्टापूर्ते इष्टापूर्ते सम् । इष्टापूर्ते इतीष्टापूर्ते । साँ सृजेथाꣳ सृजेथाꣳ सꣳ साँ
सृजेथाम् । सृजेथा मय मयꣳ सृजेथाꣳ सृजेथा मयम् । अय ञ्च चाय मय ञ्च ।
चेतिच ।। अस्मिन्त्सधस्थे सधस्थे ऽस्मि न्नस्मि न्त्सधस्थे । सधस्थे - अध्यधि
सधस्थे सधस्थे - अधि । सधस्थ इति सध = स्थे । अध्युत्तरस्मि न्नुत्तरस्मि न्नध्य
ध्युत्तरस्मिन् । उत्तरस्मिन् विश्वे विश्व उत्तरस्मि न्नुत्तरस्मिन् विश्वे । उत्तरस्मि

न्नित्युत् = तरस्मिन् । विश्वे देवा देवा विश्वे विश्वे देवा : । देवा यजमानो यजमानो देवा देवा यजमान : । यजमान श्च च यजमानो यजमान श्च । च सीदत सीदत च च सीदत । सीदतेति सीदत ।। येन वहसि वहसि येन येन वहसि । वहसि सहस्रं सहस्रँ वहसि वहसि सहस्रम् । सहस्रँ य्येन येन सहस्रं सहस्रँ य्येन । येनाग्ने ऽग्ने येन येनाग्ने । अग्ने सर्ववेदसं सर्ववेदस मग्ने ऽग्ने सर्ववेदसम् । सर्ववेदसमिति सर्व = वेदसम् ।। तेनेम मिमन् तेन तेनेमम् । इमँ य्यज्ञँ यज्ञ मिम मिमँ य्यज्ञम् । यज्ञन्नो नो यज्ञँ य्यज्ञन्न : । नो नय नय नो नो

नय । नय स्व स्वं र्नय नय स्वं : । स्वं र्दैवेषु देवेषु स्व स्वं र्दैवेषु । देवेषु गन्तवे गन्तवे देवेषु देवेषु गन्तवे । गन्तव इति गन्तवे ।।६।।

तप स्तपस्य स्तपस्य स्तप स्तप स्तपस्य : । तपस्य श्शैशिरौ शैशिरौ तपस्य स्तपस्य श्शैशिरौ । शैशिरौ परमेष्ठी परमेस्थी शैशिरौ शैशिरौ परमेष्ठी । परमेष्ठी दिवो दिव : परमेस्थी परमेष्ठी दिव : । परमेस्थीति परमे = स्थी । दिव स्सूर्य स्सूर्यो दिवो दिव स्सूर्य : । सूर्य इति सूर्य : ।। प्रोथ दश्वो ऽश्व : प्रोथ त्प्रोथ

दश्व : । अश्वो न नाश्वो ऽश्वो न । न यवसे यवसे न न यवसे । यवसे ऽविष्य
न्नविष्य न्यवसे यवसे ऽविष्यन् । अविष्य न्यदा यदा ऽविष्य न्नविष्य न्यदा । यदा
महो महो यदा यदा मह : । मह स्सँवरणा त्सँवरणा न्महो मह स्सँवरणात् ।
सँवरणा द्वि वि सँवरणा त्सँवरणा द्वि । सँवरणा दिति सं = वरणात् । व्यस्था
दस्था द्विव्यस्थात् । अस्था दित्यस्थात् ।। आदस्यास्या दादस्य । अस्य वातो
वातो ऽस्यास्य वात : । वातो - अन्वनु वातो वातो - अनु । अनु वाति
वात्यन्वनु वाति । वाति शोचि श्शोचि र्वाति वाति शोचि : । शोचि रधाध

शोचि श्शोचि रध । अध स्मस्मा धा धस्म । स्म ते ते स्म स्म ते । ते व्रजनँ व्रजन न्ते ते व्रजनम् । व्रजनङ् कृष्णङ् कृष्णँ व्रजनँ व्रजनङ् कृष्णम् । कृष्ण मस्त्यस्ति कृष्णङ् कृष्ण मस्ति । अस्तीत्यस्ति ॥ आयोष्ट्वा त्वायो रायो ष्ट्वा । त्वा सदने सदने त्वा त्वा सदने । सदने सादयामि सादयामि सदने सदने सादयामि । सादयाम्यवतो ऽवत स्सादयामि सादयाम्यवत ः । अवत श्छायायाञ् छायाया मवतो ऽवत श्छायायाम् । छायायाꣳ समुद्रस्य समुद्रस्य च्छायायाञ् छायायाꣳ समुद्रस्य । समुद्रस्य हृदये हृदये समुद्रस्य समुद्रस्य हृदये । हृदय इति

हृदये । रश्मीवतीं भास्वतीं भास्वतीꣳ रश्मिवतीꣳ रश्मीवतीं भास्वतीम् ।
रश्मिवती मिति रश्मि = वतीम् । भास्वती माया या ऽऽभास्वतीं भास्वती
माया । आया । या द्यान् द्याँ य्या या द्याम् । द्यां भासि भासि द्यान् द्यां भासि।
भास्या पृथिवीं प्रथिवी मा भासि भास्या पृथिवीम् । आ पृथिवीम् । पृथिवी
मोरूर्वा पृथिवीं पृथिवी मोरु । ओरु । उर्वन्तरिक्ष मन्तरिक्ष मुरूर्वन्तरिक्षम् ।
अन्तरिक्ष मित्यन्तरिक्षम् ।। दिवाँ सहस्रस्य सहस्रस्य दिवन् दिवाँ सहस्रस्य ।
सहस्रस्य प्रमा प्रमा सहस्रस्य सहस्रस्य प्रमा । प्रमा प्रतिमा प्रतिमा प्रमा प्रमा

प्रतिमा । प्रमेति प्र = मा । प्रतिमोन्मोन्मा प्रतिमा प्रतिमोन्मा । प्रतिमेति प्रति = मा । उन्मा साहस्र स्साहस्र उन्मोन्मा साहस्र : । उन्मेत्युत् = मा । साहस्रो ऽस्यसि साहस्र स्साहस्रोऽसि । असि सहस्राय सहस्रायास्यसि सहस्राय । सहस्राय त्वा त्वा सहस्राय सहस्राय त्वा । त्वेतित्वा ।।७।।

## इति षोळशोऽध्याय :

# अथ सप्तदशोऽध्याय :

ॐ नम स्ते ते नमो नमस्ते । ते रुद्र रुद्र ते ते रुद्र । रुद्र मन्यवे मन्यवे रुद्र रुद्र
मन्यवे । मन्यव उतो - उतो मन्यवे मन्यव उतो । उतो ते त उतो - उतो ते ।
उतो इत्युतो । त इषव इषवे ते त इषवे । इषवे नमो नम इषव इषवे नम : ।
नम इति नम : ।। बाहुभ्यां मुतोत बाहुभ्याम् बाहुभ्यां मुत । बाहुभ्या मिति
बाहु = भ्याम् । उत ते त उतोत ते । ते नमो नम स्ते ते नम : । नम इति
नम : ।। या ते ते या या ते । ते रुद्र रुद्र ते ते रुद्र । रुद्र शिवा शिवा रुद्र रुद्र

शिवा । शिवा तनू स्तनू श्शिवा शिवा तनू ः । तनू रघोरा ऽघोरा तनू स्तनूर घोरा । अघोरा ऽपाप काशिन्यपाप काशिन्य घोरा ऽघोरा ऽपापकाशिनी । अपाप काशिनीत्यपाप = काशिनी ।। तया नो न स्तया तया न ः । न स्तन्वा तन्वा नो न स्तन्वा । तन्वा शन्तमया शन्तमया तन्वा तन्वा शन्तमया । शन्तमया गिरिशन्त गिरिशन्त शन्तमया शन्तमया गिरिशन्त । शन्तमयेति शं = तमया । गिरिशन्ता भ्यभि गिरिशन्त गिरिशन्ताभि । गिरिशन्तेति गिरि = शन्त। अभि चाकशीहि चाकशीह्य भ्यभि चाकशीहि । चाकशीहीति चाकशीहि ।। या

मिषु मिषुँ य्याँ य्या मिषुम् । इषुङ् गिरिशन्त गिरिशन्तेषु मिषुङ् गिरिशन्त ।
गिरिशन्त हस्ते हस्ते गिरिशन्त गिरिशन्त हस्ते । गिरिशन्तेति गिरि = शन्त ।
हस्ते बिभर्षि बिभर्षि हस्ते हस्ते बिभर्षि । बिभर्ष्यस्तवे ऽस्तवे विभर्षि
बिभर्ष्यस्तवे । अस्तव इत्यस्तवे ।। शिवा ङ्गिरित्र गिरित्र शिवा१ शिवाङ्गिरित्र ।
गिरित्र ता न्ताङ् गिरित्र गिरित्र ताम् । गिरित्रेति गिरि = त्र । ताङ् कुरु कुरु ता
न्ताङ् कुरु । कुरु मा मा कुरु कुरु मा । मा हीँसी हिँ१सी र्मा मा हीँसी : ।
हीँसी : पुरुषं पुरुष१ हि१सी हीँसी : पुरुषम् । पुरुष ञ्जग ज्जगत् पुरुषं पुरुष

ञ्जगत् । जगदिति जगत् ।। शिवेन वचसा वचसा शिवेन शिवेन वचसा । वचसा
त्वा त्वा वचसा वचसा त्वा । त्वा गिरिश गिरिश त्वा त्वा गिरिश ।
गिरिशाच्छाच्छ गिरिश गिरिशाच्छ । गिरिशेति गिरि = श । अच्छा वदामसि
वदामस्य च्छाच्छा वदामसि । वदामसीति वदामसि ।। यथा नो नो यथा यथा
न : । न स्सर्वꣳ सर्वन् नो न स्सर्वम् । सर्व मिदि त्सर्वꣳ सर्व मित् । इञ्जग
ञ्जग दिदि ञ्जगत् । जगद यक्ष्ममम यक्ष्मञ्जग ञ्जगद यक्ष्मम् । अयक्ष्माँ सुमना
स्सुमना - अयक्ष्ममम यक्ष्माँ सुमना : । सुमना - अस दसत्सुमना स्सुमना -

असत् । सुमना इति सु = मना : ।। असदित्यसत् ।। अध्यवोच दवोच दध्यध्यवोचत् । अवोचदधिवक्ता ऽधिवक्ता ऽवोच दवोच दधिवक्ता । अधिवक्ता प्रथम : प्रथमो ऽधिवक्ता ऽधिवक्ता प्रथम : । अधिवक्तेत्यधि = वक्ता । प्रथमो दैव्यो दैव्य : प्रथम : प्रथमो दैव्य : । दैव्यो भिषग्भिषग् दैव्यो दैव्यो भिषक् । भिषगिति भिषक् ।। अहीँ श्च चाही नहीँ श्च । च सर्वान्त्सर्वाँ श्च च सर्वान् । सर्वा ञ्जम्भय ञ्जम्भय न्त्सर्वा न्त्सर्वा ञ्जम्भयन् । जम्भय न्त्सर्वा स्सर्वा जम्भय ञ्जम्भय न्त्सर्वा : । सर्वा श्च च सर्वा स्सर्वा श्च । च यातुधान्यो यातु

धान्यं श्च च यातु धान्यं : । यातुधान्यों ऽधराचीं रधराचीं र्यातु धान्यों यातु धान्यों ऽधराचीं : । यातु धान्य इति यातु = धान्यं : । अधराची : परा परा ऽधराचीं रधराची : परा । परा सुव सुव परा परा सुव । सुवेति सुव ।। असौ यो यो ऽसा - असौ य : । य स्ताम्र स्ताम्रो यो य स्ताम्र : । ताम्रो - अरुणो ऽरुण स्ताम्र स्ताम्रो - अरुण : । अरुण उतोता ऽरुणो ऽरुण उत । उत बभ्रु र्बभ्रु रुतोत बभ्रु : । बभ्रु स्सुमङ्गलं स्सुमङ्गलो बभ्रु र्बभ्रु स्सुमङ्गल : । सुमङ्गल इति सु = मङ्गलं : । ये चं च ये ये चं । चैन मेन श्च चैनम् । एनाँ रुद्रा रुद्रा -

एन मेनाँ रुद्रा : । रुद्रा - अभितो ऽभितो रुद्रा रुद्रा - अभित : । अभितो दिक्षु दिक्ष्वभितो ऽभितो दिक्षु । दिक्षु श्रिता श्श्रिता दिक्षु दिक्षु श्रिता : । श्रिता स्सहस्रश स्सहस्रशश् श्रिताश् श्रिता स्सहस्रश : । सहस्रशो ऽवाव सहस्रश स्सहस्रशो ऽव । सहस्रश इति सहस्र = श : । अवैषा मेषा मवावैषाम् । एषाः हेळो हेळ एषा मेषाः हेळ : । हेळ ईमह ईमहे हेळो हेळ ईमहे । ईमह इतीमहे ।। असौ यो यो ऽसा - असौ य : । यो ऽवसर्पत्य वसर्पति यो यो ऽव सर्पति । अवसर्पति नीलग्रीवो नीलग्रीवो ऽवसर्पत्य वसर्पति नीलग्रीव : ।

अवसर्पती त्यव = सर्पति । नीलग्रीवो विलोहितो विलोहितो नीलग्रीवो नीलग्रीवो विलोहित : । नीलग्रीव इति नील = ग्रीव : । विलोहित इति वि = लोहित : ।। उतैनमेन मुतोतैनम् । एनङ् गोपा गोपा - एन मेनङ् गोपा : । गोपा - अदृश्रन्नदृश्रन् गोपा गोपा - अदृश्रन् । अदृश्रन्न दृश्रन्न दृश्रन्न दृश्रन्न दृश्रन्न दृश्रन् । अदृश्रन्नुद हार्य उदहार्यो ऽदृश्र न्नदृश्रन्नुदहार्य : । उदहार्य स्स स उदहार्य उदहार्य स्स : । उदहार्य इत्युद = हार्य : । स दृष्टो दृष्ट स्स स दृष्ट : । दृष्टो मृळयाति मृळयाति दृष्टो दृष्टो मृळयाति । मृळयाति नो नो मृळयाति मृळयाति

न : । न इति न : ।। नमो ऽस्त्वस्तु नमो नमो ऽस्तु । अस्तु नीलग्रीवाय नीलग्रीवाया स्त्वस्तु नीलग्रीवाय । नीलग्रीवाय सहस्राक्षाय सहस्राक्षाय नीलग्रीवाय नीलग्रीवाय सहस्राक्षाय । नीलग्रीवायेति नील = ग्रीवाय । सहस्राक्षाय मीळ्हुषे मीळ्हुषे सहस्राक्षाय सहस्राक्षाय मीळ्हुषे । सहस्राक्षायेति सहस्र = अक्षाय । मीळ्हुष इति मीळ्हुषे ।। अथो ये ये ऽथो - अथो ये । अथो इत्यथो । ये - अस्यास्य ये ये - अस्य । अस्य सत्वान स्सत्वानो ऽस्यास्य सत्वान : । सत्वानो ऽह महश्च सत्वान स्सत्वानो ऽहम् । अहन् तेभ्य स्तेभ्यो ऽह महन्तेभ्य : ।

तेभ्यो ऽकर मकर न्तेभ्य स्तेभ्यो ऽकरम् । अकरन् नमो नमो ऽकर मकरन्
नमः । नम इति नमः ।। प्र मुञ्च मुञ्च प्र प्र मुञ्च । मुञ्च धन्वनो धन्वनो मुञ्च
मुञ्च धन्वनः । धन्वन स्त्व न्त्वन् धन्वनो धन्वन स्त्वम् । त्व मुभयो रुभयो स्त्व
न्त्व मुभयोः । अभयो रात्न्यों रात्न्यों रुभयो रुभयो रात्न्योः । आत्न्यों ज्यांज्
ज्या मात्न्यों रात्न्यों ज्याम् । ज्यामिति ज्याम् ।। या श्च च या याश्च । च ते ते
च च ते । ते हस्ते हस्ते ते ते हस्ते । हस्त इषव इषवो हस्ते हस्त इषवः ।
इषवः परा परेषव इषवः परा । परा तास्ताः परा परा ताः । ता भगवो

भगव स्तास्ता भगव : । भगवो वप वप भगवो भगवो वप । भगव इति भग = व : । वपेति वप ।। विज्यन् धनु र्धनु र्विज्यँ विज्यन् धनु : । विज्य मिति वि = ज्यम् । धनु : कपर्दिन : कपर्दिनो धनु र्धनु : कपर्दिन : । कपर्दिनो विशल्यो विशल्य : कपर्दिन : कपर्दिनो विशल्य : । विशल्यो बाणवान् बाणवान् विशल्यो विशल्यो बाणवान् । विशल्य इति वि = शल्य : । बाणवाँ - उतोत बाणवान् बाणवाँ - उत । बाणवा निति बाण = वान् । उतेत्युत ।। अनेशन्नस्यास्या नेशन्ननेशन्नस्य । अस्य या या - अस्यास्य या : । या - इषव इषवो या या -

